NOW AVAILABLE AT ALL LEADING STORES

# TRAPPED

## GAMES AND ACTIVITY CD-ROM






PROF. PURENOTHIN, THE RENOWNED INDOLOGIST, IS TRAPPED INSIDE THE MOUND OF MURUKKI. YOU JOIN DETECTIVE MANDOO TO SEARCH FOR THE PROFESSOR AND SAVE HIM. THE ONLY WAY TO THE MOUND OF MURUKKI IS REVEALED TO YOU. ONLY WHEN YOU CAN GET HOLD OF FOUR KEYS HIDDEN ALONG YOUR ROUTE. AND YOU HAVE TO SEARCH FOR THEM THROUGH A DOZEN DIFFERENT GAMES AND ACTIVITIES. GO FOR CLUES AND KEYS!

MIND YOU, YOU HAVE ONLY 60 MINUTES TO REACH THE PROFESSOR! GET THERE FAST, BUT BEWARE OF YOURSELF BEING TRAPPED!



*Hey, but this one is a whole lot of fun! You have a different set of games and activities, every time you begin your search.*

A quality product from **Chandamama**

For more details, please contact :
**Chandamama India Limited,**
82, Defence Officers' Colony,
Ekkatuthangal, Chennai - 600 097.
www.chandamama.org

RS. 199/- ONLY



# CHANDAMAMA

PRESENTS




## "BE A DREAM CHILD" CONTEST

The President of India, Dr. A.P.J.Abdul Kalam, in the course of his interaction with children, has been exhorting them to DREAM for the future of India and its people. Recently, at the end of his address to the nation on January 25, he administered an oath to a group of children. For the sake of our young readers, the 10-point oath is reproduced below.

1. I will pursue my education or work with dedication and I will excel in it.
2. I will teach at least 10 illiterate persons to read and write.
3. I will plant at least 10 saplings and shall ensure their growth through constant care.
4. I will visit rural and urban areas, and permanently wean away at least five persons from addiction and gambling.
5. I will constantly endeavour to remove the pain of my suffering brethren.
6. I will not support any religious, caste or language differentiation.
7. I will be honest and will endeavour to make a corruption free society.
8. I will work for becoming an enlightened citizen, and make my family righteous.
9. I will always be a friend of the mentally and physically challenged and will work hard to make them feel normal, like the rest of us.
10. I will proudly celebrate the success of my country and my people.

Chandamama invites the children of India to write one para each about what they have achieved in fulfilling the ten points by the next Independence Day. The contest is open to children between 8 and 15.

ENTER THE CONTEST AND WIN ATTRACTIVE PRIZES!

THREE BEST ENTRIES WILL BE PUBLISHED IN OUR NOVEMBER 2004 ISSUE.

LOSING DATE : ugust 31 2004

Watch for instructions and details of prizes in the April 2004 issue

# अब्दुल्लः तारामती बारादरी च



सप्तदशे शतके अब्दुल्लः नाम कश्चन राजा आसीत् । सः कुतबशाहिवंशस्य सप्तमः शासकः आसीत् । तद्वंशीयाः गोलकोण्डादुर्गे वसन्ति स्म ।

यदा अब्दुल्लः पट्टाभिषेकं प्राप्तवान् तदा सः द्वादशवर्षीयः आसीत् । सः प्रसिद्धे गोलकोण्डा-दुर्गे वसति स्म । तच्च दुर्गम् उन्नतया भित्त्या आवृतम् आसीत् । सा भित्तिः आसीत् शिलामयी । दुर्गभित्तेः अन्तः अनेके प्रकोष्ठाः प्रासादाः च आसन् । दुर्गस्य अन्तः तादृशी ध्वनिव्यवस्था आसीत्, यस्याः च साहाय्येन सन्देशस्य स्वीकारः प्रेषणं च शक्यते स्म । एतदनुगुणतया एव भित्तीनां सञ्चारपथानां च निर्माणं कृतम् आसीत् । तत्र प्रतिध्वनिपुरस्सरं ध्वनेः सञ्चारः भवति स्म ।

अब्दुल्लः चित्रकलासु, सङ्गीते, काव्येषु च विशेषतः आसक्तः आसीत् । स्वयम् अपि सः पद्यानि रचयति स्म । तेन रचितानि ८० पद्यानि उपलभ्यन्ते अद्यापि ।

यदा सः शासनं करोति स्म तदा तारामती नाम काचित् परिचारिका आसीत् । सा कुशल-मतिः, गाननिपुणा च । सा हिन्दुकुलीया । अब्दुल्लाय तस्याः गानं विशेषतः अरोचत ।

गोलकोण्डादुर्गं हरिद्वर्णीयैः सस्यैः, वहन्तीभिः लघुनदीभिः, फलमयैः वृक्षैः लघुपर्वतैः च आवृतम् आसीत् । तत् दुर्गं कस्यचित् पर्वतस्य शिखरे एव आसीत् । राजा अब्दुल्लः स्वस्य दुर्गात् मैल्दूरे स्थिते लघुपर्वते एकं विश्रान्तिस्थलं निर्मापितवान् आसीत् । तत्र गमनाय द्वादश द्वाराणि अतिक्रमणीयानि भवन्ति स्म । अत्र द्वादश द्वाराणि आसन् इत्यतः एषः 'बारादरी' (द्वादशद्वारा) इति निर्दिश्यते स्म । बारदरीप्रदेशम् अब्दुल्लः तारामत्यै उपायीकृतवान् आसीत् । तत्र उपविश्य सा गायति स्म । स च प्रदेशः सर्वदा शीतलवातावरणोपेतः भवति स्म । यदा सा तत्र उपविश्य गायति स्म तदा ततः निर्गतः मधुरः ध्वनिः अब्दुल्लस्य वासस्थानं प्रति मन्दगत्या गच्छति स्म । अब्दुल्लः तस्याः गानाय एव विशिष्टानि पद्यानि रचयति स्म । सा च स्वस्य सुमधुरेण कण्ठेन तत् गायति स्म । श्रुतिमधुरं तत् सङ्गीतं श्रोतॄन् आह्लादयति स्म । एवं तारामती बारादरी प्रसिद्धिं गता ।



# तारामती बारादरी

## सङ्गीतनृत्यसाम्राज्यम्

गोलकोण्डादुर्गं हैदराबादनगरात् अनतिदूरे अस्ति । हैदराबादनगरम् आन्ध्रप्रदेशराज्यस्य राजधानी । एतस्मिन् राज्ये बहूनि प्रवासिकेन्द्राणि सन्ति । तेषु गोलकोण्डदुर्गं बहु प्रसिद्धम् । एतस्मिन् दुर्गे दृश्यश्रव्यमाध्यमेन इतिहासः यत् दर्श्यते तत् तु पर्यटकान् विशेषतः आकर्षति ।

तारामतीबारादरीप्रदेशः इदानीं पुनरुज्जीवितः अस्ति । नवाः सञ्चारमार्गाः चित्ताकर्षकः दीपालङ्कारः च एतस्य भव्यतां वर्धयन्ति । हरिद्वर्णीयैः निबिडतृणैः समग्रः परिसरः विभूषितः अस्ति । सङ्गीतनृत्यकार्यक्रमस्य प्रदर्शनार्थं किञ्चन भित्तिपरिवृतं सभाङ्गणम्, अपरं भित्तिरहितं सभाङ्गणं च सज्जीकृतम् अस्ति अत्र ।

वासाय प्रकोष्ठाः, आहारसेवनाय उपाहार-मन्दिराणि इत्यादयः अपि अत्र व्यवस्थापिताः सन्ति । एषः प्रदेशः सांस्कृतिककेन्द्रं यथा स्यात् तथा चिन्तितम् अस्ति ।

ये एतं प्रदेशं दृष्ट्वा सङ्गीतनृत्यकार्यक्रमम् अपि पश्यन्ति ते निश्चयेन 'वाह् वाह्' इत्यादिभिः शब्दैः साधुवादं वदन्ति । यश्च साधुवादः चतुश्शताधिक-वर्षेभ्यः पूर्वम् अब्दुल्लराजस्य काले बहुधा श्रूयते स्म । यदि भवन्तः हैदराबादनगरं गमिष्यन्ति तदा एतस्य प्रदेशस्य दर्शनं मा विस्मरन्तु कृपया ।



Newly created facilities around Taramati Baradari

चन्दमामा

सम्पुटः - २१ मार्च् - २००४ सञ्चिका - १२

# एतस्य अङ्कस्य विशेषाः



भल्लूकमान्त्रिकः
१



अगम्यस्य महाकाव्यम् (वेतालकथा)
१५



अहो, अपरिहार्यं बन्धनम्
२२



विष्णुपुराणम् - ३
६१

# अन्तरङ्गम्



## ग्राहकशुल्कम् -

अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

## शुल्कविवरणम्

वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् !

**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal,
**CHENNAI - 600 097**
E.mail : subscription@chandamama.org



संस्थापकौ –
चक्रपाणिः नागिरेड्डी च

# किं नास्ति मूल्यं मानवप्राणानाम् ?

एषु दिनेषु अस्माभिः पत्रिकासु व. र्ग पठिता स्यात् यत् उभौ युवकौ धावतः ट्रेन्यानात् अधः पातितौ कैश्चित् इति । ताभ्यां को वा अपराधः कृतः ? ट्रेन्याने प्रवासं कुर्वतीनां पीडाम् उपहासं च कुर्वतां तरुणानां विरोधं कृतवन्तौ आस्तां तौ । तदर्थम् एव ते दुष्टाः तरुणाः तासां तरुणीनाम् अवतरणस्य अनन्तरं दण्डनाधिकारं चालितवन्तः ।

५५ तमस्य गणराज्योत्सवस्य दिनद्वयात् पुर्वम् एषा नृशंसा लज्जाकरी घटना प्रवृत्ता । यत् संविधानं समानतां, स्वातन्त्र्यं, सुरक्षां च ददाति तस्य संविधानस्य शुभारम्भः यस्मिन् दिने जातं तत् दिनं निमित्तीकृत्य गणतन्त्रदिनम् आचर्यते । पुर्वोक्ता घटना तु संविधानम् एव उपहसति इव । गणतन्त्रदिने देशेन तत्तद्वर्षे साधितायाः प्रगतेः प्रदर्शनं क्रियते शोभायात्रामाध्यमेन । राष्ट्रस्य गौरवं वर्धयति तत् । प्रवृद्धं तत् गौरवं गर्ते पातितम् इव एतया घटनया ।

मानवतावृद्ध्यर्थं देशेन विविधाः कार्यक्रमाः अनुष्ठिताः, अनुष्ठीयमानाः च सन्ति । ऋषिमुनिभिः उद्ग्रन्थैः च यानि मानवीयतत्त्वानि प्रतिपादितानि तेषां संरक्षणाय क्रियमाणाः प्रयासाः तु अनल्पाः । वयं सस्यानां पशुपक्षिणां च जीवानां रक्षणाय प्रयासं कुर्मः, किन्तु मानवानां जीवनस्य रक्षणम् एव उपेक्षितम् इव भाति कचित् ।

निरपराधाः स्फूर्तिमद्रूपाः तरुणाः तरुण्यः च बलिं याताः दृश्यन्ते बह्वीषु घटनासु । पूर्वोक्तायां घटनायां तु तैः दुष्टैः सद्व्यवहारसीमा निश्चयेन अतिक्रान्ता । सा घटना यदा प्रवृत्ता, तदा तस्मिन् याने शताधिकाः आसन् । तथापि तेषु केनापि न चिन्तितं यत् एतयोः धीरतरुणयोः साहाय्यं करणीयं, तयोः प्रयासः समर्थनीयः च इति । एतत् तु महते आश्चर्याय विषादाय च । प्रायः ताभ्याम् अपि न चिन्तितम् आसीत् यत् आत्मना कृतस्य कार्यस्य निमित्तं प्राणत्यागरूपं मूल्यं दातव्यं भवेत् इति । मानवप्राणाः अल्पमूल्यकाः निर्मूल्यकाः वा जाताः दृश्यन्ते इदानीम् ।

*सम्पादकः* – **विश्वम्**





Statement about Ownership of

**CHANDAMAMA (Sanskrit)**

Rule 8 (Form VI), Newspaper (Central) Rules, 1956

1. Place of Publication
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
2. Periodicity of Publication
   MONTHLY
   1st of each calendar month
3. Printer's Name
   B. VISWANATHA REDDI
   Nationality
   INDIAN
   Address
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
4. Publisher's Name
   B. VISWANATHA REDDI
   Nationality
   INDIAN
   Address
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
5. Editor's Name
   B. VISWANATHA REDDI
   (Viswam)
   Nationality
   INDIAN
   Address
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
6. Name and Address of individuals who own the paper
   Chandamama India Ltd.
   Board of Directors:
   1. P. Sudhir Rao
   2. Vinod Sethi
   3. B. Viswanatha Reddi
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097

*I,* **B. Viswanatha Reddi,** *do hereby declare that the particulars given above are true to the best of my knowledge and belief.*

(Sd.) B. VISWANATHA REDDI

1st March 2004 *Publisher*



# भल्लूकमान्त्रिकः

## ३

*[राज्ञा जितकेतुना अरण्यसीमायां स्थितस्य ग्रामस्य निवासिनः लुण्ठाकाक्रमणतः मुक्तान् कृतवतः कालीवर्मणः मरणदण्डनं विहितं प्रतिवेशिराजात् भीतेन । यदा शिरश्छेदः आसन्नः तदा मुख्यवधकस्य हस्तात् परशुं स्वीकृत्य कालीवर्मणा अश्वदलनायकस्य शिरः कर्तितः । तावता – 'आदिभल्लूकः जयतात्' इति ध्वनिः श्रुतः । तदनन्तरम् ....]*

'आदिभल्लूकः जयतात्' इत्येतत् वचनं श्रुत्वा सर्वे अश्वारोहिणः आश्चर्येण मुखं परिवर्त्य ध्वनेः दिशि दृष्टिं प्रसारितवन्तः । कालीवर्मा अश्वात् अवतीर्य पूर्वम् अश्वदलनायकाय यः स्वस्य खड्गः दत्तः आसीत् तं प्रतिस्वीकृत्य कोषे स्थापितवान् । एतदभ्यन्तरे जलप्रपातस्य पुरतः सर्वैः कश्चन दीर्घकायः पुरुषः दृष्टः ।

'एषः कश्चन मान्त्रिकः स्यात् । सः यः कोऽपि भवेत् नाम । किं तेन मम ? मया तु इतः पलायनीयम् । पलायनावसरे एते अश्वारोहिणः मम मार्गस्य अवरोधं कुर्युः' इति विचिन्त्य कालीवर्मा अश्वारोहिणः परीक्षादृष्ट्या दृष्टवान् । ते सर्वे मुखेन भीतिं वहन्तः जलप्रपातम् एव निर्निमेषदृष्ट्या पश्यन्तः आसन् ।

जलप्रपातस्य पुरतः स्थितः सः उन्नतकायः जले सञ्चरन् तीरम् आगतवान् । सः



दृढकायः दण्डहस्तः च आसीत् । भल्लूकस्य चर्म धृतवान् आसीत् । तस्य दण्डस्य ऊर्ध्व-भागे रजतनिर्मितं भल्लूकमुखं विलसति स्म ।

कालीवर्मा पलायनचिन्तनं क्षणकालं विस्मृत्य तमेव आश्चर्येण अपश्यत् । आश्चर्यजनितात् आघातात् अश्वारोहिणः महिषारोही च इतोऽपि मुक्ताः न आसन् ।

भल्लूकचर्मधारी सः जनः कालीवर्मणः समीपम् आगत्य अवदत् – ''यदि अहं समये आदिभल्लूकस्य नाम न उच्चारितवान् स्यां तर्हि महान् रक्तपातः अभविष्यत् । अहमस्मि भल्लूकमान्त्रिकः'' इति ।

द्वित्रक्षणान् यावत् सर्वे मौनेन स्थित-वन्तः । कालीवर्मा एकेन हस्तेन खड्गम् अपरेण वधकस्य परशुं च गृहीत्वा उच्च-स्वरेण भल्लूकमान्त्रिकम् अवदत् – ''महाशय ! केनापि अपृष्टः सन् भवान् स्वनाम उक्तवान् । एतत् तु उचितम् एव जातम् । रक्तपातनिवारणस्य प्रस्तावः कृतः भवता । सावधानतया शृणोतु तावत् । मम मार्गे ये ये विघ्नम् उत्पादयन्ति तेषां शिरांसि भूमौ पतिष्यन्ति'' इति । ततः सः स्वस्य अश्वम् अग्रे सारितवान् ।

''हे युवक ! भवान् महाधैर्यशाली इत्यत्र नास्ति सन्देहः । क्षणं तिष्ठतु तावत्'' इति वदन् भल्लूकमान्त्रिकः स्वस्य मन्त्रदण्डम् उन्नीय महिषस्य उपरि उपविष्टवन्तं वधकं प्रताड्य अपृच्छत् – ''वस्त्रेण मुखम् आच्छादितवान् भवान् शिरीषवनस्य पिशाचः, उत प्रधानवधकः ?'' इति ।

''श्रीमन् ! अहं न पिशाचः । राज्ञा नियुक्तः प्रधानवधकः अस्मि । राजा यस्मै शिरश्छेददण्डं विधत्ते तस्य शिरसः छेदनं मम कार्यम्'' इति अवदत् वधकः । मान्त्रिकं दृष्ट्वा भीते महिषे धैर्यं पूरयन् आसीत् सः तस्य कण्ठं पुनः पुनः स्पृशन् ।

भल्लूकमान्त्रिकः अश्वदलनेतुः शवं पश्यन् वधकम् अपृच्छत् – ''शिरश्छेद-दण्डात् आत्मानं रक्षित्वा राजसेवकस्य शिरः कर्तयित्वा पलायितुम् उद्युक्तस्य विषये भवतः कीदृशः व्यवहारः स्यात् ?'' इति ।

''श्रीमन् ! अहम् आयुधहीनः अस्मि । मम आयुधम् एषः अपराधी कालीवर्मा बलात् स्वायत्तीकृतवान् अस्ति'' इति असहायकस्वरेण उक्तवान् वधकः ।

कालीवर्मा अवगतवान् यत् एषः भल्लूक-मान्त्रिकः वधकम् अश्वदलीयान् च मद्विरुद्धं प्रेरयन् अस्ति इति । सः परशुं वधकस्य

दिशि प्रसार्य अवदत् - "अये ! किम् आयुधचिन्तया ? स्वस्य परशुं स्वीकरोतु । यदि धैर्यं स्यात् तर्हि मम मार्गस्य अवरोधं करोतु । सजीवं स्थातव्यम् उत मरणं प्राप्तव्यम् इति भवान् एव निर्णयतु" इति ।

तदा वधकः स्वस्य मुखावरणम् अपनीय कम्पमानेन स्वरेण अवदत् - "महाशय ! भवान् अस्ति महायोद्धा । अहं शिरीषवनस्य भैवरस्य नाम्ना शपे - भवतः मार्गस्य अवरोधः न क्रियते मया । मम गर्वः अपगतः अस्ति" इति ।

कालीवर्मा अश्वारोहिणः पश्यन् अपृच्छत् - "भो भोः, भवतां कः निर्णयः ? स्वस्य नायकस्य का गतिः जाता अस्ति इति भवन्तः जानन्ति एव" इति ।

"तस्य शिरः भूमौ पतितम् अस्ति । अपरः शरणं गतः अस्ति । एवं स्थिते भवतः मार्गावरोधं कृत्वा प्राणैः वियुक्ताः भवितुं वयं न मूर्खाः । यत् प्रवृत्तं तत् राजानं निवेदयिष्यामः वयम्" इति अवदत् अश्वदलीयः कश्चित् ।

"योग्यः निर्णयः कृतः अस्ति भवद्भिः" इति वदन् कालीवर्मा स्वस्य अश्वं प्रेरितवान् अग्रे गमनाय ।

तदा भल्लूकमान्त्रिकः तदीयस्य अश्वस्य खलीनं झटिति गृहीत्वा अवदत् - "भल्लूकपादाः ! भवद्भिः यादृशः इष्टः तादृशः लब्धः अस्ति इदानीम्" इति । ततः सः कालीवर्माणम् उद्दिश्य अवदत् - "भोः कालीवर्मन् ! भवता प्रायः विस्मृतम् अस्ति यत् लोकविख्यातः महामन्त्रवेत्ता भल्लूकमान्त्रिकः अपि अत्र अस्ति इति" इति ।



आ बाल्यात् अपि मान्त्रिकादीनां विषये कालीवर्मणः अल्पः अपि आदरः न आसीत् । एतादृशान् बहून् स्वग्रामपरिसरे दृष्टवान् आसीत् सः ।

भल्लूकमान्त्रिकस्य वचनानि श्रुत्वा कालीवर्मा अचिन्तयत् यत् एषः मयि अनादरं प्रकाशयन् अस्ति इति । अतः सः क्रोधेन अवदत् - "महाशय ! भवतः नाम किम् इति उक्तम् ? भल्लूकमान्त्रिकः इति खलु ? भवतः नाम एव विलक्षणम् अस्ति । भवता अन्यस्यापि नाम उच्चारितम् । किं तत् नाम ? मादृशं सामान्यं जनं कः भल्लूकः किं वा कुर्यात् ? भवादृशानां नामस्मरणम् अपि कष्टकरं मम" इति ।

कालीवर्मा भल्लूकमान्त्रिकस्य नाम्नः



उपहासं कृतवान् चेदपि भल्लूकमान्त्रिकः कुपितः न जातः । सः मन्दहासपूर्वकम् अवदत् - ''मम गुरोः नाम भल्लूकपादः इति । मम नाम भल्लूकमान्त्रिकः इति । अग्रे जायमानानां महाकार्याणां दर्शनेन आश्चर्यान्वितः भविष्यति भवान् । मम मद्गुरोः च नाम्नि कश्चन समानांशः अस्ति । किन्तु तावता भेतव्यं नास्ति भवता'' इति ।

''गृहात् निर्गमनस्य अनन्तरं यद्यत् घटितं, यद्यत् दृष्टं च तस्मात् अहं क्षुब्धः जातः अस्मि । शीघ्रातिशीघ्रम् अहं ग्रामं प्रतिगन्तुम् इच्छामि । तत्र कृषिं कुर्वन् सन्तोषेण दिनानि यापयिष्यामि अहम्'' इति अवदत् कालीवर्मा ।

ततः सः वधकम् उद्दिश्य परशुं क्षिप्त्वा ततः निर्गन्तुम् इच्छन् अश्वम् आदिष्टवान् अग्रे गमनाय । अश्वः कानिचन पदानि अस्थापयत् । तदा भल्लूकमान्त्रिकः उच्चस्वरेण अवदत् - ''कालीवर्मन् ! तिष्ठतु तावत् । अभिमुखं के आगच्छन्तः सन्ति इति किं दृष्टं भवता ?'' इति ।

एतत् श्रुत्वा कालीवर्मा मुखम् उन्नीय दृष्टवान् । विशालस्य शिरीषवृक्षस्य पार्श्वे त्रयः अश्वारोहिणः आगच्छन्तः तेन दृष्टाः । तेषु अन्यतमः कौशेयवस्त्रम् उष्णीषं च धृतवान् आसीत् । तम् उभयतः उभौ कवचधारिणौ सैनिकौ आस्ताम् । तौ खड्गं बाणवारकं च धृतवन्तौ आस्ताम् ।

तान् दृष्ट्वा कालीवर्मा अश्वस्य गमनं स्थगितवान् । कवचधारिणोः मध्ये स्थितः कौशेयवस्त्रधारी पुरुषः हस्तम् उन्नीय कालीवर्माणं दर्शयन् वधकम् अवदत् - ''अये नगरस्य प्रधानवधक ! महाराजः एतस्य शिरश्छेदम् आज्ञापितवान् अस्ति । तथापि भवान् इतोऽपि एतस्य शिरश्छेदं किमर्थं न कृतवान् ?'' इति ।

वधकः कम्पमानः सन् महिषात् अवतीर्य किं वक्तव्यम् इति यावत् चिन्तयन् आसीत् तावता भल्लूकमान्त्रिकः तस्य समीपं गत्वा अपृच्छत् - ''भवान् एव खलु राज्ञः जितकेतोः प्रधानमन्त्री जीवगुप्तः ?'' इति ।

मन्त्री जीवगुप्तः अचिन्तयत् यत् राज्ञः मम च विषये अनादरसूचकं शब्दं प्रयुज्य अशिष्टशैल्या प्रश्नं पृच्छन् एषः कश्चन कपटसंन्यासी इति । सः नेत्रे रक्तीकृत्य क्रोधमिश्रितेन स्वरेण आदिशत् - ''सैनिकाः ! आदौ एतं प्रहृत्य बन्दीकुर्वन्तु'' इति ।

मन्त्रिणः आदेशं श्रुत्वा तत्पार्श्वे स्थितौ

खड्गधारिणौ खड्गम् आक्रष्टुम् उद्युक्तौ । तावता ताभ्यां मान्त्रिकस्य हस्ते स्थितः दण्डः दृष्टः । तस्मात् तौ भीतौ । तयोः अश्वौ हेषारवं कुर्वन्तौ पृष्ठतः गतवन्तौ ।

''श्रीमन् ! तस्य मान्त्रिकस्य मन्त्रदण्डस्य अग्रभागे भल्लूकमुखं दृश्यते । सः भल्लूकः दंष्ट्रां प्रसार्य नेत्राभ्याम् अग्निकणान् उद्वमन् इव दृश्यते'' इति अवदत् कश्चन अश्वारोही ।

जीवगुप्तः भल्लूकमान्त्रिकस्य मन्त्रदण्डे स्थितं भल्लूकशिरः दृष्ट्वा उपहासमिश्रितेन स्वरेण - ''अये, भवतः व्यवहारः चेष्टाः च गर्वद्योतकाः सन्ति । किं भवान् मन्त्रतन्त्रेन्द्रजालादिकं जानाति ?'' इति ।



मन्त्रिणः वचनं श्रुत्वा क्रुद्धः भल्लूकमान्त्रिकः नेत्रगोलकं भ्रामयन् मन्त्रिणं तीक्ष्णदृष्ट्या पश्यन् - ''अये, मां सामान्यं संन्यासिनं भावयति भवान् ? अहमस्मि भल्लूकमान्त्रिकः । मम वास्तविकं सामर्थ्यं न दृष्टं भवता । अतः एवम् उपहासः क्रियते । भोः, पश्यतु मम सामर्थ्यम् । जयतु आदिभल्लूकः'' इति उच्चैः उक्त्वा मन्त्रदण्डेन पार्श्वस्थाम् एकां वृक्षशाखां स्पृष्टवान् ।

अनन्तरक्षणे एव वृक्षशाखायाम् अग्निकणाः दृष्टाः । क्षणाभ्यन्तरे समग्रः वृक्षः अग्निना आवृतः जातः । मन्त्री जीवदत्तः भीतः जातः । भीतः तदीयः अश्वः ततः पलायनम् आरब्धवान् । कवचधारिणौ अङ्गरक्षकौ भयेन कम्पमानौ मन्त्रिणम् अनुसृतवन्तौ ।

द्वित्रान् क्षणान् सर्वे आश्चर्येण स्तब्धाः सन्तः मौनम् आश्रितवन्तः । एतत्सर्वं दृष्ट्वा कालीवर्मा अश्वं प्रेरयन् भल्लूकमान्त्रिकस्य समीपं गतवान् । अश्वात् अवतीर्य अवदत् - ''अहो, भवान् सामान्यः मान्त्रिकः न । महान् मन्त्रवेत्ता अस्ति । कपटः दुष्टमन्त्री भवता यथा भायितः तथैव राजा अपि किमर्थं न भाय्यते स्वशक्त्या ? तं भाययित्वा सः योग्येन मार्गेण कार्यं यथा कुर्यात् तथा करोतु कृपया'' इति ।

''साधु युवक, साधु ! भवान् न केवलं धीरः, बुद्धिमान् अपि अस्ति । मम मनसि यत् अस्ति तदेव उच्चारितं भवता'' इति वदन् भल्लूकमान्त्रिकः कालीवर्मणः प्रशंसां कृतवान् । ततः सः मन्त्रिणम् अपृच्छत् - ''अये मन्त्रिन् ! किं भवता मम शक्तिः दृष्टा ? इदानीं वदतु - अत्रत्यान् आदेष्टुम् अर्हता कस्य अस्ति ? मम, उत भवतः ?

आवयोः कतरः शक्तिशाली ?'' इति ।

तदा मन्त्री कम्पमानेन स्वरेण अवदत् - ''महाशय ! भल्लूकमान्त्रिकवर्य ! भवतः शक्तिशालिता प्रत्यक्षं दृष्टा अस्ति मया । भवान् न केवलम् अत्रत्यान्, अपि तु राजभवने वसन्तं महाराजं जितकेतुम् अपि आदेष्टुम् उपदेष्टुं च समर्थः अस्ति'' इति ।

भल्लूकमान्त्रिकः वधकम् आदिशत् - ''अये, शिरसः कर्तनस्य कार्यं कुर्वन् भवान् रुण्डे मुण्डस्य योजनम् अपि जानीयात् एव । अतः भवान् अश्वदलनायकस्य शिरः शरीरे योजयित्वा सीवनं कृत्वा तम् अश्वस्य उपरि उपवेश्य रज्ज्वा बध्नातु'' इति ।

वधकः अल्पे एव काले स्वस्य कार्यं पूर्णं कृतवान् । अश्वदलनायकस्य शरीरम् अश्वस्य उपरि उपवेश्य रज्ज्वा बद्धवान् च । किन्तु त्वराकारणतः सः मुण्डं पृष्ठ-दर्शित्वेन सीवितवान् आसीत् । अतः दर्शनात् भासते स्म यत् परिवृत्तमुखः अश्वस्य उपरि उपविष्टः अस्ति इति ।

वधकेन कृतम् एतं प्रमादं दृष्ट्वा ऋते मन्त्रिणः, सर्वे उच्चैः हसितवन्तः । भल्लूकमान्त्रिकः क्रोधपूर्णया दृष्ट्या पश्यन् मन्त्रिणम् आदिष्टवान् - ''अये मन्त्रिन् ! भवान् वधकस्य वाहने उपविशेत् । वधकः भवद्वाहने उपविश्य प्रयाणं करोतु'' इति ।

जीवगुप्तः भीत्या कम्पमानः सन् महिषस्य उपरि उपविष्टवान् । वधकश्च मन्त्रिणः अश्वम् आरुह्य उपविष्टवान् । तदा भल्लूकमान्त्रिकः सर्वान् आदिशत् - ''सर्वे राजधानीं प्रति गच्छन्तु'' इति ।

मन्त्रिणः विषये कृतम् अगौरवप्रदर्शनं दृष्ट्वा प्रसन्नः कालीवर्मा अवदत् - ''एतां शोभायात्रां दृष्ट्वा नगरस्य जनाः निश्चयेन मनोरञ्जनं प्राप्स्यन्ति । अहं मम ग्रामं प्रति गच्छामि तावत्'' इति ।

एतावत् उक्त्वा कालीवर्मा अश्वम् आरुह्य ततः प्रस्थातुम् उद्युक्तः । तदा भल्लूक-मान्त्रिकः मन्त्रदण्डम् उन्नीय तम् अवदत् - ''किं भवता मदादेशः न श्रुतः ?'' इति ।

''आदेशः ? कस्य आदेशः ? माम् आदेष्टुम् अर्हः कोऽपि नास्ति अत्र'' इति वदन् कालीवर्मा कोषात् खड्गम् आकृष्ट-वान् । – *(अनुवर्तते)*



# वेताल-कथा

# अगम्यस्य महाकाव्यम्

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवन्तं बोधयन् अहम् एव श्रान्तः । तथापि भवान् तु स्वकृत्यात् न विरतः । राज्ञः सतः भवतः एतादृशः परिश्रमः किम् उचितः ? प्रजाहित-साधनाय यत्नः एव राज्ञः कर्तव्यम् । केनचित् अयोग्येन प्रवर्तितः सन् भवान् कृतज्ञताप्रदर्शनाय एतादृशं कार्यं कुर्वन् न स्यात् खलु ? यद्येवं स्यात् तर्हि गिरिपुरस्य युवराजः इव भवान् अपि अनृजुः भवेत् । तस्य युवराजस्य अगम्यस्य च कथां श्रावयामि । मार्गायासपरिहाराय तां श्रद्धया शृणोतु'' इति ।



अनन्तरं वेतालेन कथा आरब्धा –

अगम्यः नरसिंहपुरस्य निवासी । प्रसिद्धिः प्राप्तव्या इति तस्य महती इच्छा । नितरां दरिद्रः आसीत् सः । धनस्य सम्पादनाय तेन महान् परिश्रमः कृतः । अन्ते अपि सः महाधनाढ्यः न जातः । तथापि सुखेन जीवनयापनाय यावत् आवश्यकं तावत् तु धनम् अस्ति तस्य ।

इदानीं चिन्तनाय प्रभूतः समयः प्राप्यमाणः अस्ति तेन । विरामसमये सः चिन्तयति – 'एतादृश्याः स्थितेः प्राप्तये मया महान् परिश्रमः कृतः ! तथापि जनाः तत् न अवगच्छन्ति । मां श्रेष्ठं न मन्यन्ते' इति ।

स्वस्य श्रेष्ठतायाः ख्यापनाय सः स्वस्य जीवनस्य वैशिष्ट्यानि बहून् श्रावितवान् । दारिद्र्यात् मुक्तिं प्राप्तुं किं किं कृतं, कानि कष्टानि अनुभूतानि इत्यादिकं विस्तरेण श्रावयति सः । एतत् श्रुत्वा केचन मौनेन स्थितवन्तः । पुनः केचन उक्तवन्तः – ''जीवने एतादृशानि कष्टानि सोढवन्तः बहवः सन्ति'' इति ।

अत्रान्तरे पुरन्दरः नाम कश्चित् पण्डितः तं ग्रामं प्रति आगतः । सः त्रीणि दिनानि यावत् रामायणकथां श्रावितवान् । ग्रामीणाः सर्वे तस्य प्रशंसां कृतवन्तः । प्रतिदिनं यः कोऽपि तं स्वगृहं प्रति आहूय सत्कारं करोति स्म ।

पुरन्दरः कदाचित् अगम्येन निमन्त्रितः सन् तदीयं गृहं गतवान् । अगम्यः तम् उत्तम-भोजनादिना सत्कृत्य अवदत् –''महोदय ! श्रीरामः जीवने नानाविधानि कष्टानि अनु-भूतवान् । किन्तु तानि सर्वाणि गृहस्य जनानां निमित्तं सोढवान् सः । पितृवाक्यपरि-पालनाय सः अरण्यं गतः । पत्न्याः प्राप्तये सः रावणस्य वधं कृतवान् । अन्ते सः राजा सन् सुखेन देशं पालितवान् । एतादृशः रामः महात्मा अस्ति । स्वस्य परिवारस्य निमित्तं कष्टानि सोढवन्तः तादृशाः एव अन्ये अपि सन्ति । तथापि श्रीरामेण यावती ख्यातिः प्राप्ता तावती अन्यैः न प्राप्ता'' इति ।

तदा पुरन्दरः अवदत् – ''भवतः कथनं युक्तियुक्तम् अस्ति । ज्येष्ठानाम् अविवेकः, ईर्ष्याद्वेषादयः, स्वार्थप्रलोभनादयः च सर्वत्र भवन्ति । तस्मात् नर-वानर-राक्षसादीनां सृष्टिः निरन्तरं प्रचलति । ततः विविधाः कथाः उत्पद्यन्ते । तथापि तेषां कथाः नः गीयन्ते । भवता येषां कथा प्रस्तुता तेषां कथा यदि वाल्मीकिना रचिता स्यात् तर्हि प्रायः ते अपि भगवत्त्वं प्राप्तवन्तः स्युः'' इति ।

पुरन्दरस्य वचनानि अगम्ये महान्तं परिणामम् अजनयन् । श्रीरामः इव अहम् अपि महात्मा अस्मि इति भावः तस्मिन् उत्पन्नः । अतः सः पुरन्दरम् अवदत् - ''महोदय ! अहं मम कथां भवन्तं श्रावयिष्यामि । भवान् रामायणकाव्यसदृशं काव्यं लिखतु । तेन मम भवतः चापि प्रसिद्धिः भविष्यति'' इति ।



तदा पुरन्दरः अवदत् - ''काव्यरचनाविचारः पार्श्वे भवतु नाम । आदौ भवान् स्वजीवनगाथां श्रावयतु । तत्र अहं कुतूहली अस्मि'' इति ।

ततः अगम्यः स्वजीवनगाथाम् श्रावितवान् । पुरन्दरः तां श्रद्धया अशृणोत् । तस्याः श्रवणात् तस्य मनसि अभासत यत् अगम्यस्य जीवने प्रवृत्ताः घटनाः सामान्याः एव इति । अतः सः अगम्यम् अवदत् - ''मादृशाः वाल्मीकिरामायणस्य व्याख्यानं कुर्वन्ति इत्यतः जनेषु रामायणविषये आदरः दृश्यते । अतः भवान् आदौ आत्मानम् अधिकृत्य काव्यं स्वयं लिखतु । तदा भवान् श्रीरामात् अपि श्रेष्ठः भवितुम् अर्हति । श्रीरामः तु आत्मानम् अधिकृत्य काव्यं स्वयं न रचितवान् । भवता तु कृतं भविष्यति । तस्मात् भवान् एव श्रेष्ठः भवेत्'' इति ।

पुरन्दरस्य वचनं युक्तम् इति अमन्यत अगम्यः । 'अहं काव्यं लेखितुं शक्नुयाम् उत न' इति आदौ तस्य मनसि प्रश्नः उत्पन्नः । 'अशिक्षितः वाल्मीकिः एव यदि रामायणं रचयितुं शक्नुयात् तर्हि सुशिक्षितः अहं शक्नुयाम् एव'' इति निश्चित्य सः स्वकथां काव्यरूपेण लेखितुं प्रयत्नम् आरब्धवान् । द्वित्रमासाभ्यन्तरे काव्यलेखनं समाप्तम् । स्वस्य काव्यरचनासामर्थ्यविषये तस्य मनसि गर्वः अपि उत्पन्नः ।

सः स्वस्य काव्यं पत्नीं श्रावयितुम् उद्युक्तः । तदा सा अवदत् - ''किं मह्यं श्रावणेन ? मया अज्ञातः कः अंशः अस्ति अत्र ?'' इति ।

''रामायणे अपि भवत्या अज्ञातः अंशः कोऽपि नास्ति । तथापि पौनःपुन्येन तत् श्रोतुं प्रवृत्तिः किमर्थं दृश्यते भवत्याः ?'' इति ताम् अपृच्छत् अगम्यः ।

''रामस्य कथा अन्या एव । तां भवत्कथया मा तोलयतु भवान् । किं रामायणविषये चर्चया ? ये भवतः कथां न श्रुतवन्तः तान् भवान् स्वकाव्यं श्रावयतु'' इति उक्तवती पत्नी ।



ततः अगम्यः पुत्रपौत्रान् आहूय स्वकथा-श्रावणे प्रयत्नं कृतवान् । सः तान् अवदत् - ''लवकुशौ रामायणस्य प्रचारं कृतवन्तौ । भवन्तः अपि मम काव्यस्य प्रचाराय प्रयासं कुर्वन्तु । तेन मद्विषयकात् ऋणात् मुक्तिः प्राप्येत'' इति ।

तदा ते उक्तवन्तः - ''नैव । वयम् एतत् कार्यं न करिष्यामः । एतत् काव्यम् अस्मभ्यं न अरोचत । यदि भवान् इच्छति तर्हि वयं रामायणस्यैव प्रचारं करिष्यामः'' इति ।

एवं कोऽपि तदीयस्य काव्यस्य श्रवणे उत्सुकः न दृष्टः । अत्रान्तरे काचित् घटना घटिता, येन तदीयं भाग्यं फलितं जातम् ।

कदाचित् सः कस्यचित् कार्यस्य निमित्तं पार्श्वस्थं ग्रामं प्रति गत्वा प्रत्यागच्छन् आसीत् । तदा मार्गपार्श्वे कस्यचित् वृक्षस्य अधः पतितः कश्चन जनः तेन दृष्टः । तत्समीपं गत्वा यदा दृष्टं तदा ज्ञातं यत् सः मूर्च्छां गतः अस्ति इति । अगम्यः झटिति तं स्वस्य शकटे आरोप्य समीपस्थं नन्दनपुरं प्रति नीतवान् । तत्रत्यः वैद्यः तं युवकं परीक्ष्य अवदत् - ''एषः कस्यचित् वृक्षस्य विषमयं फलं खादितवान् । अतः मूर्च्छां गतः अस्ति । अहं किञ्चन औषधं ददामि । चत्वारि दिनानि यावत् एतस्मै तत् औषधं दातव्यम् । ततः एषः सचेतनः भविष्यति । एतस्य सेवा जागरूकतया करणीया'' इति ।

वैद्येन दत्तस्य औषधस्य कारणतः चतुर्णां दिनानाम् अनन्तरं सः युवकः सचेतनः जातः । सः प्रवृत्तं सर्वं ज्ञात्वा अगम्यम् अवदत् - ''भवता महान् उपकारः कृतः । मम प्राणाश्च रक्षिताः । न जाने, एतस्मात् ऋणात् कथं मुक्तिः प्राप्येत इति'' इति ।

''यदि ऋणमुक्तिविचारः भवतः मनसि वस्तुतः अपि दृढः अस्ति तर्हि मम काव्यं शृणोतु, तस्य प्रशंसां करोतु च'' इति अवदत् अगम्यः । सः युवकः एतत् अङ्गी-कृतवान् । ततः अगम्यस्य कथा सश्रद्धं श्रुता तेन । मध्ये मध्ये नीरसताभावः उत्पद्यते चेदपि कष्टेन समग्रं काव्यं श्रुत्वा विविधैः शब्दैः काव्यस्य प्रशंसा अपि कृता तेन ।

एतां श्रुत्वा सन्तुष्टः सन् अगम्यः अवदत् - ''अद्य मम एका इच्छा पूर्णा । न जाने, अपरा इच्छा कदा पूर्णा भवेत् इति'' इति ।

तदा युवकः अवदत् - ''ताम् अपि इच्छां पूरयिष्यामि । सा का इति निस्सङ्कोचं वदतु तावत्'' इति ।

''तां पूरयितुं भवान् न शक्नोति । राजा

एकः एव तां पूरयितुं शक्नुयात्'' इति निराशतामिश्रितेन स्वरेण अवदत् अगम्यः ।

''न केवलं राजा, अपि तु युवराजः अपि तां पूरयितुं समर्थः स्यादेव खलु ? अहम् अस्मि एतस्य देशस्य युवराजः'' इति अवदत् सः युवकः ।

'मया रक्षितः युवराजः एव' इति ज्ञातवान् अगम्यः नितरां सन्तुष्टः सन् अवदत् - ''आवयोः मेलनं शुभोदर्काय एव इति अहं मन्ये । रामायणस्य यादृशः प्रचारः अस्ति तादृशः एव प्रचारः मम काव्यस्यापि भवेत् इति मम द्वितीया इच्छा'' इति ।

एतत् श्रुतवतः युवराजस्य मुखं विच्छायं जातम् । 'महात्मा रामः क्व !, क्व च अयं सामान्यः अगम्यः !!' इति चिन्तयन् सः क्षणकालं यावत् न ज्ञातवान् यत् इदानीं किं करणीयम् इति । किञ्चित् विचिन्त्य सः अपृच्छत् - ''भवता एतत् काव्यं कतिभ्यः जनेभ्यः श्रावितम् ?'' इति ।

''प्रायः द्वादश जनाः एतत् श्रुतवन्तः स्युः'' इति उक्तवान् अगम्यः ।

''एतस्मिन् देशे दशलक्षं जनाः सन्ति । इदानीं ये द्वादश जनाः भवतः काव्यं श्रुतवन्तः तेभ्यः ऋते अन्ये सर्वे भवतः काव्यस्य प्रशंसां यथा कुर्युः तथा व्यवस्थाम् अहं करिष्यामि । एतस्य प्रचारम् अपि करिष्यामि । वाल्मीकिः स्वजीविते एकम् एव काव्यं रचितवान् । भवता अपि अपरं काव्यं न रचनीयम् इति तु नियमः'' इति ।

अगम्यः एतत् अङ्गीकृतवान् । युवराजः अगम्यम् आत्मना सह राजधानीं प्रति



नीतवान् । महाराजस्य पुरतः तदीयं नामादिकम् उक्त्वा - ''एतस्य नाम अगम्यः इति । एषः मम प्राणदाता अस्ति । एतेन एकं महाकाव्यं रचितम् अस्ति । तत् वाल्मीकि-रामायणतुल्यम् अस्ति । एषः अस्माकम् आस्थाने आदरणीयं स्थानं प्राप्नुयात् । एतस्य काव्यस्य श्रेष्ठतायाः प्रचारः सर्वत्र स्यात् । एषा मम इच्छा'' इति अवदत् ।

महाराजः युवराजस्य वचनम् अङ्गीकृत्य अगम्याय उन्नतं स्थानं परिकल्पितवान् । तस्य काव्यस्य प्रचारः समग्रे देशे कारितः । एतं प्रचारं श्रुत्वा महान्तः पण्डिताः तस्य पठनाय उत्साहं प्रदर्शितवन्तः । किन्तु केनापि तत् काव्यं न प्राप्तम् एव । यतः तस्य एका एव प्रतिकृतिः या आसीत् सा राजकुमारस्य सकाशे आसीत् । पठितुम् आगतान् युवराजः वदति स्म - ''दौर्भाग्य-

र्वशात् सा प्रतिकृतिः अग्निना दग्धा जाता । पुनरपि तस्य काव्यस्य लेखनम् अगम्यः न अनुमन्यते । अतः तस्य काव्यस्य स्मृतिमात्रेण सन्तोष्टव्यम् अस्माभिः'' इति ।

महाराजेनापि एषः विषयः ज्ञातः । सः युवराजम् आहूय - 'किं प्रवृत्तम् ?' इति पृष्टवान् । तदा युवराजः पितरं वस्तुस्थितिं यथावत् निवेद्य अवदत् - ''स्वकाव्यस्य महान्तं प्रचारम् इच्छति स्म अगम्यः । महाकवित्वेन ख्यातिः स्यात् इति तस्य अदम्या इच्छा आसीत् । जनाः काव्यं यदि पठेयुः तर्हि एव प्रचारस्य वास्तविकताम् अवास्तविकतां वा अभिजानीयुः । तावत् तु ते प्रचारे एव विश्वसन्ति । अतः मया काव्यं दग्धम् । अगम्यः अपरं काव्यं यथा न लिखेत् तथा मया जागरूकता आश्रिता अस्ति । मया दत्तं वचनं पालितम्'' इति ।

''भवतः व्यवहारे दोषः अस्ति । सत्यनिष्ठतायां लोपः अस्ति'' इति असन्तोषेण उक्तवान् राजा ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! सर्वे भवतः काव्यस्य प्रशंसां यथा कुर्युः तथा करिष्यामि इति वचनं दत्तवता युवराजेन काव्यस्य कवेः च प्रचाराय यः मार्गः आश्रितः सः किम् उचितः ? किं तेन वचनबद्धता पालिता ? किं वयं तं सत्यनिष्ठम् ऋजुं च वक्तुं शक्नुयाम ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''अगम्यस्य काव्यं श्रुतं द्वादशभिः जनैः । ते तु अगम्यस्य प्रशंसां न कृतवन्तः । अतः युवराजः अपरेण मार्गेण तदीयस्य काव्यस्य प्रशंसां कारितवान् । प्राणदातुः सन्तोषाय तेन एषा अवास्तविकी प्रशंसा कारिता । एतस्मात् कस्यापि हानिः न आसीत् । एतस्मिन् व्यवहारे युवराजस्य स्वार्थः अपि कोऽपि न आसीत् । अतः तेन आश्रितः मार्गः निन्द्यः न । अप्रशस्तः स्यान्नाम । अनन्यगतिकतया तेन एवं कृतम्'' इति ।

एवं राज्ञः मौनभङ्गः यदा जातः तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।






## पशुपक्षिणः आदरपात्रीभूताः

भारतीयाः वयं बहुषु पशुषु पक्षिषु च दैवत्वं पश्यामः । मूषकः गणेशस्य वाहनम् । गणेशस्य पितुः ईश्वरस्य वाहनं वृषभः (नन्दी) ।

हनुमान् रामसीता-लक्ष्मणानां महाभक्तः । सः तु कपिकुले जातः । अतः एव कपयः न मार्यन्ते, न वा तेषां व्रणोऽपि वा क्रियते । भीत्युत्पादनेन ते दूरं तु प्रेष्यन्ते ।

भगवतः शिवस्य द्वितीयस्य पुत्रस्य कार्त्तिकेयस्य वाहनं मयूरः (मयूरजातीयः अन्यः पक्षी वा) । ते कार्त्तिकेयस्य देवालये पाल्यन्ते भगवते समर्प्यन्ते च । सुब्रह्मण्यः, वेलायुधः, दण्डपाणिः इत्यादीनि कार्त्तिकेयस्य एव नामान्तराणि दक्षिणभारते ।

भगवान् विष्णुः शेषशायी । तन्नाम सः अनन्तनामकस्य सर्पस्य उपरि शेते । अतः सर्पाः अपि पूज्यन्ते, दैवीय-भावनया दृश्यन्ते च । गरुडः विष्णोः वाहनम् । गरुडः गृध्रजातीयः ।

भगवान् कृष्णः गोपालकः । अतः गावः महता आदरेण पूज्यन्ते दक्षिणभारते उत्तरभारते च । पशुपक्षिषु आदरः प्रदर्श्यते चेत् निसर्गे अपि आदरः प्रदर्शितः इव ।



# अहो, अपरिहार्यं बन्धनम् !

''किम् एतस्य ग्रामस्य नाम वदनपुरम् इति ? अस्माकं समीरस्य ग्रामः एषः एव । किं जातं स्यात् तस्य ?'' इति अपृच्छत् गुरुः पद्मानन्दः ।

वदनपुरं पद्मानन्दस्य आश्रमात् विंशतिक्रोशदूरे अस्ति । क्षेत्रयात्रां कृत्वा शिष्याभ्यां सह प्रत्यागच्छन् पद्मानन्दः मध्येमार्गं वदनपुरं प्राप्य पूर्वोक्तं प्रश्नं कृतवान् आसीत् ।

समीरः पूर्वं योगाभ्यासाय पद्मानन्दस्य आश्रमे वासं करोति स्म । गुरोः प्रियः शिष्यः आसीत् सः । एकस्मिन् दिने तेन वार्ता प्राप्ता यत् पितुः तीव्रम् अस्वास्थ्यम् इति । अतः पितुः दर्शनाय सः ग्रामं प्रतिगतः । 'मासाभ्यन्तरे प्रत्यागमिष्यामि' इति उक्त्वा गतः आसीत् सः ।

एतत्सर्वं दशभ्यः वर्षेभ्यः पूर्वं प्रवृत्ता घटना । यदा वदनपुरं दृष्टं तदा गुरोः मनसि भावना उत्पन्ना यत् समीरः किं कुर्वन् अस्ति इति ज्ञातव्यम् इति ।

पद्मानन्दस्य शिष्यौ मार्गे गच्छन्तं कञ्चित् तद्ग्रामीणं पृष्टवन्तौ - ''एतस्य ग्रामस्य तरुणः, समीरनामकः पूर्वं पद्मानन्दाश्रमे निवसति स्म । किं भवता तद्विषये किमपि ज्ञायते ?'' इति ।

''समीरश्रेष्ठिविषये पृच्छ्यते ? आम् । सः पूर्वं पद्मानन्दवर्यस्य आश्रमे आसीत् । पितुः अस्वास्थ्यवार्तां श्रुत्वा सः प्रत्यागतः । पिता तस्य विवाहं निर्वर्त्य व्यवहारभारं तस्मिन् आरोपितवान् । गुरोः कृपया सः इदानीं सुखेन जीवति । तत् महत् भवनम् एव



तदीयं गृहम्'' इति वदन् सः ग्रामीणः प्रासादसदृशम् एकं भवनं दर्शित-वान् ।

गुरुः तच्छिष्यौ च बाह्यद्वारम् अतिक्रम्य गृहस्य पुरतः स्थितम् उद्यानं प्रविष्टवन्तः । समीरः गृहस्य ऊर्ध्वभागे स्थित्वा एतेषाम् आगमनं दृष्टवान् । झटिति धावन् आगत्य गुरुं पादौ स्पृष्ट्वा नमस्कृतवान् ।

''इदानीं तु सायङ्कालसमयः । अद्य रात्रौ भवता मम गृहे एव स्थातव्यम् । यदि भवान् कानिचन दिनानि मम गृहे वसेत् तर्हि अहं परमं सौभाग्यं प्राप्तं भावयेयम्'' इति निवेदितवान् सः ।

रात्रौ तत्रैव स्थितिम् अङ्गीकृतवान् गुरुः । भूरिभोजनं व्यवस्थापितं समीरेण । रात्रौ सः एकान्ते अश्रूणि स्रावयन् गुरुम् अवदत् - ''गुरुवर्य ! अहं कौटुम्बिकसूत्रेण बद्धः अस्मि । यदा मम पुत्रौ प्राप्तवयस्कौ भविष्यतः तदा अहं समग्रं व्यवहारं तयोः कृते समर्प्य आश्रमं प्रत्यागमिष्यामि । भवतः सेवां कुर्वन् शेषजीवनं सुखेन यापयिष्यामि'' इति ।

''आश्रमे यदि अहं न भवेयं तर्हि भवतः सहाध्यायिषु अन्यतमः आश्रमस्य प्रमुखः भवेत् । सः भवदर्थं सर्वां व्यवस्थां करिष्यति । भवता योगशास्त्रम् अधीतम् । अतः अध्यात्ममार्गः सर्वथा न त्यक्तव्यः भवता'' इति अवदत् गुरुः ।

अनन्तरदिने प्रातः गुरुः शिष्याभ्यां सह ततः निर्गतवान् । खेदेन एव समीरः गुरुं प्रेषितवान् ।

पुनरपि दश वर्षाणि अतीतानि । गुरुः पुनरपि प्रयाणावसरे वदनपुरं प्रति आगतः । सः प्रियशिष्यस्य समीरस्य गृहं गतवान् । समीरः पुनरपि गुरोः पादौ गृहीत्वा अश्रूणि



स्रावयन् - ''मम पौत्रः मयि अतीव प्रीतिमान् अस्ति । सः इदानीम् अल्पवयस्कः । यदा सः विद्यालयगमनसमर्थः भविष्यति तदा अहम् एतत्सर्वं परित्यज्य भवतः आश्रमम् आगमिष्यामि एव'' इति ।

''अभीष्टसिद्धिरस्तु'' इति आशिषा अनुगृह्य गुरुः ततः निर्गतवान् ।

अनन्तरवर्षे गुरुः दिवं गतः । मरणात् पूर्वं सः शिष्यान् अवदत् - ''समीरः न विस्मर्तव्यः । आश्रमं प्रति आगमनस्य इच्छां प्रबलतया सः वहति अद्यापि । किन्तु सः व्यामोहसूत्रेण बद्धः अस्ति । कथमपि सः रक्षणीयः अस्माभिः'' इति । कानिचन वर्षाणि अतीतानि । आश्रमस्य उत्तराधिकारिणः गङ्गानन्दस्य मनसि इच्छा उत्पन्ना यत् समीरस्य का स्थितिः इति ज्ञातव्यम् इति । 'समीरः कथमपि रक्षणीयः' इत्येषः गुरोः आदेशः तेन स्मर्यते स्म । अतः

सः वदनपुरं गतवान् । तत्र तेन ज्ञातं यत् समीरः दिवं गतः अस्ति इति । समीरस्य पुत्राः तम् आदरेण स्वागतीकृत्य तदीयवासाय उत्तमां व्यवस्थां कृतवन्तः ।

यदा सः तत् गृहं प्रविष्टः तदारभ्य तद्गृहीयः शुनकः तदीयौ पादौ जिह्वया पुनः पुनः लेढि स्म, निरन्तरं पुच्छं चालयति स्म च । शुनकः सदा तेन सहैव स्थातुम् इच्छति स्म । रात्रौ कथमपि शुनकः दूरे स्थापितः । तस्य शुनकस्य विषये कुतूहलम् उत्पन्नं गङ्गानन्दस्य मनसि । रात्रौ प्रकोष्ठे ध्यानेन मनसः एकाग्रतां सम्पाद्य शुनकस्य पूर्वजन्मनः विवरणं प्राप्तं तेन । शुनकस्य अन्तः समीरस्यैव आत्मा आसीत् । चोरेभ्यः गृहस्य पुत्राणां च रक्षणं करोति स्म सः ।

शुनकरूपी समीरात्मा प्रार्थयत् यत् शीघ्रातिशीघ्रम् एतस्मात् जन्मनः मम मुक्तिः स्यात् इति । 'तथास्तु' इति उक्त्वा अनन्तरदिने ततः निर्गतवान् गङ्गानन्दः ।

पञ्चानां वर्षाणाम् अनन्तरं गङ्गानन्दः पुनरपि तद्गृहं प्रति आगतवान् । शुनकः दिवं गतः आसीत् । समीरस्य आत्मा इदानीं कुत्र स्यात् इति जिज्ञासा उत्पन्ना गङ्गानन्दस्य मनसि । रात्रौ ध्यानावस्थायां सः ज्ञातवान् यत् समीरस्य आत्मा सर्पशरीरं श्रितः अस्ति इति । गृहस्य अन्तः स्थितायाः काष्ठपेटिकायाः कोणे वसन् सः सर्पः गृहजनानां सम्पत्तिं जागरूकतया रक्षति स्म ।

गङ्गानन्दः अचिन्तयत् यत् एतस्य परिहारोपायः कोऽपि चिन्तनीयः इति । अतः प्रातःकाले सः गृहजनान् सूचितवान् यत् पेटिकायां कोऽपि सर्पः निवसति इति । गृहजनाः अहितुण्डिकम् आनायितवन्तः । पेटिकायाः अन्तः धूमः प्रेषितः । तस्मात् सर्पः एकस्मिन् कोणे निश्चलतया अतिष्ठत् । अहितुण्डिकः तं गृहीतवान् । कश्चन सेवकः तं सर्पं यदा प्रहर्तुम् उद्युक्तः तदा गङ्गानन्दः तं निवारितवान् । सर्पस्य मारणं सः न ऐच्छत् । सः सर्पं कस्मिंश्चित् घटे पूरयित्वा आश्रमं प्रति अनयत् । तत्र सः आसन्नमरणस्य सर्पस्य निमित्तं कांश्चन विधीन् अनुष्ठाय सर्पः सद्गतिं यथा प्राप्नुयात् तथा कृतवान् ।

गङ्गानन्दः प्रवृत्तं सर्वं मनसि आकलयन् अचिन्तयत् - 'अहो, समीरः अध्यात्मासक्तः बुद्धिमान् च आसीत् । आवां सहाध्यायिनौ अपि आस्व दीर्घकालं यावत् । किन्तु दौर्भाग्यं नाम विषयवासनाग्रस्तः सः अज्ञानेन आवृतः आसीत्' इति ।



# वार्ताविशेषः




## छायाचित्रं गृहीतं सहस्राधिकैः युगपत्

अखिलकेरलच्छायाचित्रग्राहकसंस्थया गते अगस्त्मासे केरलस्य राजधान्यां तिरुवनन्तपुरे सम्मेलनम् आयोजितम् आसीत् 'जागतिकं छायाचित्रदिनं निमित्तीकृत्य । तत्र सचिवानाम्, उच्चाधिकारिणां, राज्यसभासदस्यानां च पुरतः चित्रग्राहकाणाम् अधिकाराः आधिकारिकतया अङ्गीकृताः । एषा ऐतिहासिकी घटना समग्रदेशतः आगतैः सहस्राधिकैः छायाचित्रग्राहकैः चित्रीकृताः । समाने काले तावन्ति छायाचित्रग्राहकयन्त्राणि कार्यम् अकुर्वन् इत्येषः तु अपूर्वा घटना । अ.के.छा.संस्था निरीक्षते यत् एतस्याः घटनायाः उल्लेखः गिन्नीसपुस्तके भवेत् इति ।

## यत्र अधीतं तस्मै विद्यालयाय धनम्



त्रिंशतः वर्षेभ्यः पूर्वं डा॰ प्रभुगोयलः कानपुरस्थायां भारतीयतन्त्रज्ञानसंस्थायाम् (ऐ.ऐ.टि.) अधीत्य पदवीं प्राप्तवान् आसीत् । एषु दिनेषु तत्र गतः सः १०,००,००० डालराणि दत्तवान् तस्यै संस्थायै शोधाभिवृद्धिकार्याय मूलधनत्वेन ।

तत्रत्यायाः पदव्याः प्राप्तेः अनन्तरं सः अमेरिकादेशं गत्वा डाक्टरेट्पदवीं प्राप्तवान् । क्यालिफोर्नियाराज्ये स्थितायां नेट्वर्क्-सेक्युरिटिसंस्थायां कार्यं कृत्वा विविधानां समस्यानां परिहारोपायम् अन्विष्टवान् सः ।

डा॰ गोयल्वर्यः अचिन्तयत् यत् भारते अपि एतादृशं शोधकार्यं प्रचलेत् इति । कानपुरसंस्थायाः ऋणम् अपि तेन प्रत्यर्पणीयम् आसीत् । अतः सः तस्यै संस्थायै दशलक्षं डालराणि दत्त्वा आशंसनम् अकरोत् यत् एतस्मात् धनात् देशोपयोगि संशोधनं किमपि प्रचलेत् इति ।

# अपूर्वः गुप्तचरः

प्रथमजागतिकयुद्धस्य कालः सः । तन्नाम १९१७ तमं वर्षम् । ब्रिटिष्-गुप्तचरदलस्य प्रमुखः काञ्चित् समस्याम् अनुभवति स्म । ब्रिटिष्सेनया यदा पूर्वीय-प्रदेशाः स्वायत्तीकृताः तदा तेन गुप्तचर-दलप्रमुखेण ज्ञातं यत् शत्रुदलीयाः गुप्तचराः अत्र बहवः सन्ति इति । एतां विपदं सम्मुखीकुर्वद्भिः सैनिकैः कीदृशी युद्धनीतिः आश्रयणीया भवेत् इत्येतत् गम्भीरतया चिन्तयन् आसीत् सः ।



तस्य नाम मन्नेरिङ्गः इति । तेन श्रुतं यत् फ्रिजः नाम जर्मनीयः गुप्तचरः आंग्लानां सैन्यप्रदेशे सञ्चरन् विषयसङ्ग्रहं कुर्वन् अस्ति इति । किन्तु फ्रिजः केनापि प्रत्यक्षं न दृष्टः आसीत् । अतः मन्नेरिङ्गस्य समस्या – 'किम् एषा किंवदन्ती एव स्यात्, उत वस्तु-स्थितिः ?' इति ।

'यथाकथञ्चित् भवतु, ज्येष्ठान् प्रति एतस्य विषयस्य कथनम् एव वरम्' इति निश्चित्य सः आत्मना श्रुतं सर्वं ज्येष्ठाधि-कारिणं निवेदितवान् । शत्रुदलीयस्य गुप्त-चरस्य विषये विशेषावधानदानं वरम् इति ज्येष्ठाधिकारिणा सूचितम् । तदनुगुणं सर्वे सैनिकाः सूचिताः – जर्मनगुप्तचरविषये विशेषदृष्टिः भवतु इति ।

कदाचित् मन्नेरिङ्गः युद्धबन्दीनां कारागारं द्रष्टुं गतः । तस्य नाम तत्रत्यैः सर्वैः ज्ञायते स्म प्रायः । यदा सः तत्र गतः तदा तेन वार्ता प्राप्ता यत् कश्चन ग्रीकबन्धी द्रष्टुम् इच्छति इति । तुर्किष्सैन्यात् अधिगृहीतः आसीत् सः बन्धी ।

मन्नेरिङ्गः तस्य बन्धिनः प्रकोष्ठं प्रति गतवान् ।

"श्रीमन् ! यस्य अन्वेषणं भवन्तः कुर्वन्तः सन्ति तम् अहं जानामि । तस्य नाम फ्रिजः इति खलु ? तेन सह मया किञ्चित्कालं कार्यं कृतम् आसीत् अपि" इति अवदत् सः बन्धी ।

"भवान् विनोदवचनं वदन् नास्ति खलु ?" इत अपृच्छत् मन्नेरिङ्गः ।

"नैव ! सर्वथा नैव । यदि भवन्तः मां कारागारात् मुक्तं कुर्युः तर्हि अहं तस्य ग्रहणाय उपकारं कुर्याम्" इति अवदत् सः बन्धी ।

सम्यक् विचिन्त्य मन्नेरिङ्गः तस्य विमोचनाय मतिं कृतवान् । किन्तु विमोचनात् पूर्वं तं ग्रीकदूतावासं प्रति नीत्वा दृढीकरणं प्राप्तवान् यत् एषः वास्तविकः ग्रीकः एव इति ।

विमोचनं प्राप्तवान् ग्रीकः फ्रिजस्य ग्रहणोपायं विवृण्वन् अवदत् – "लघु-कलहस्य कारणतः अहं फ्रिजतः पृथग्भूतः । इदानीं पुनरपि प्रत्यागमनेच्छां प्रदर्शयन् अहं फ्रिजसमीपं गमिष्यामि । कानिचन अमूल्यानि सैन्यीयविवरणानि दीयन्ते इति अहं तं वदिष्यामि । एतस्मात् सः मयि विश्वासं करिष्यति । ततः 'तुर्किपृसीमातः बहिः मेलिष्यामः' इति अहं तं वदिष्यामि । तदा तत्र तस्य ग्रहणं क्लेशाय न भवेत्" इति ।

ततः तस्मै ग्रीकाय अनपायकराणि कानिचन विवरणानि दत्तानि । तानि प्राप्य सः ग्रीकः ततः अदृश्यतां गतः ।

सप्ताहः अतीतः । दत्तं वचनं पालयन् ग्रीकः प्रत्यागत्य मन्नेरिङ्गम् अवदत् यत् अमुके दिने ब्रिटिषीये अमुके प्रदेशे फ्रिजस्य मेलनं



भविष्यति इति । फ्रिजस्य मेलनार्थं विशिष्टं स्थानं चितवान् आसीत् सः ग्रीकः । निर्जनं स्थलम् आसीत् तत् । शुष्कायाः कुल्यायाः तीरे आसीत् तत् । दूरात् तत् न अभिज्ञायते स्म अपि ।

इदानीं सः दुर्ग्राह्यः फ्रिजः मम जाले पतितः' इति अचिन्तयत् गुप्तचर-विभागाधिकारी मन्नेरिङ्गः । सन्तुष्टः सः निश्चिते दिने तत् स्थलं गतवान् । तत्र अश्वम् आरुह्य स्थितः ग्रीकः दूरात् एव तेन अभिज्ञातः ।

ग्रीकः स्वस्य वचनं पालितवान् आसीत् । सः मन्नेरिङ्गम् अवदत् – "फ्रिजः केनचित् सैनिकेन सह ब्रिटिषप्रदेशम् अचिरात् एव प्रवेक्ष्यति" इति । ततः फ्रिजस्य प्रतीक्षां कुर्वन्तौ तौ सामान्यवार्तालापे उद्युक्तौ जातौ । फ्रिजस्य साहचर्यम् आसीत् इत्येतत् प्रमाणीकुर्वन् ग्रीकः विवरणानि घटनाः च श्रावितवान् ।

"किं भवान् भुषुण्डिकासहितः ?" इति वार्तालापमध्ये एव अपृच्छत् ग्रीकः ।

''आम् ! भुषुण्डिका अस्ति एव मत्समीपे'' इति अवदत् सः गुप्तचराधिकारी ।

''एव तर्हि यदा फ्रिजः दृश्यते तदा झटिति एव भवान् गोलकप्रयोगेण तं मारयतु'' इति असूचयत् ग्रीकः ।

अल्पे एव काले धूलेः उद्गमः दृष्टः । ततः अश्वस्य खुरपुटध्वनिः अपि श्रुतः । कश्चन आकारः दृष्टिगोचरः जातः । ''सः कश्चन सैनिकः । ब्रिटिष्सैनिकवेषं धृतवान् अस्ति सः । फ्रिजः तम् अनुसरन् अचिरात् एव अत्र उपस्थितः भवेत्'' इति अवदत् ग्रीकः ।

सः सैनिकः ग्रीकसमीपम् आगत्य कानिचन पत्राणि दत्तवान् । ततः सः जर्मन्भाषाया अवदत् - ''ब्रिटिष्सैनिकाः तं तुर्किष्सीमां प्रति बलात् प्रतिप्रेषितवन्तः'' इति । ग्रीकः आश्चर्यभावम् असन्तोषं च प्राप्तवान् । सः मन्नेरिङ्गम् अवदत् यत् फ्रिजः पुनरपि ब्रिटिष्प्रदेशं प्रति यथा आगच्छत् तथा करिष्यामि, पुनरपि मेलनदिनाङ्कं निश्चेष्यामि इति ।

मन्नेरिङ्गः तयोः सम्भाषणं दुरात् श्रुतवान् आसीत् । तयोः सम्भाषणं प्रवृत्तम् आसीत् जर्मन्भाषया । 'तौ किमर्थं वा ग्रीक्भाषया सम्भाषणं न कृतवन्तौ'' इति आश्चर्यम्





अनुभूतवान् सः अधिकारी । तथापि ग्रीकस्य कथनस्य अनुसरणात् ऋते अन्यः कोऽपि मार्गः न आसीत् तस्य । कथमपि फ्रिजः ग्रहीतव्यः एव इति तस्य निर्णयः आसीत् ।

''एतदवसरे शत्रुप्रदेशं प्रति तस्य सहायकसैनिकस्य प्रतिगमनम् अहं न अनुमंस्ये । त्रिभिः ज्ञातः अंशः रहस्यपदेन निर्देष्टुं योग्यः न भवति । अतः तस्य बन्धनं करिष्यते मया'' इति अवदत् मन्नेरिङ्गः ।

ग्रीकः मेलनस्थानं पश्यन् एव मन्नेरिङ्गस्य प्रस्तावम् अङ्गीकृतवान् । सः सैनिकः अश्वात् अवतीर्य किञ्चिद्दूरे स्थितः आसीत् । ग्रीकः मन्नेरिङ्गं निवेदितवान् - ''कुल्यायाः अपरपार्श्वे मार्गः पलायनयोग्यः अस्ति वा इति परिशीलयतु । आवां तं विनायासं गृह्णीयाव'' इति ।

मन्नेरिङ्गः कोषस्थायाः भुषुण्डिकायाः प्रेरकपिञ्जम् अङ्गुल्या स्पृशन् स्वस्य अश्वं किञ्चित् अग्रे नीतवान् । ततः यावत् सः अश्वस्य उपरि उपविष्टवान् तावता

भुषुण्डिकाप्रयोगध्वनिद्वयं तेन श्रुतम् । गोलकद्वयं तस्य पार्श्वतः निर्गतम् । सः परिवृत्य अपश्यत् । ग्रीकः अपरः सैनिकः च तम् उद्दिश्य भुषुण्डिकाप्रयोगे निरतौ आस्ताम् । अपायं सन्निहितं ज्ञातवान् सः स्वयमपि गोलकप्रयोगं कृतवान् निरन्तर-तया । सैनिकः व्रणितः सन् भूमौ अपतत् । तावता ग्रीकः अश्वम् आरुह्य ततः पलायित-वान् आसीत् । आरोहिरहितः सैनिकस्य अश्वः अपि तम् अनुसृतवान् आसीत् ।

मन्नेरिङ्गः झटिति भूमौ पतितस्य व्रणितस्य तस्य सैनिकस्य समीपं गतवान् । तत्र परिशीलनात् ज्ञातं यत् सः सैनिकः न, अपि तु सैनिकवेषधारिणी स्त्री इति । जर्मन्देशीया सा ब्रिटिष्सैनिकवेषं धृतवती आसीत् । अल्पे एव काले सा प्राणैः वियुक्ता जाता ।

एतावता सूर्यास्तः जातः आसीत् । विषण्णवदनः मन्नेरिङ्गः ततः प्रतिप्रस्थित-वान् । अज्ञाततया महिला मारिता आसीत् तेन ।

'यदि अहं किञ्चित् असावधानः स्यां तर्हि मया प्राणवियुक्तिः प्राप्तव्या अभविष्यत् । दैवात् अहं रक्षितः, महिला च मरणं प्राप्तवती' इति अचिन्तयत् मन्नेरिङ्गः ।

सः ग्रीकः कः आसीत्, सा जर्मन्-महिला च का आसीत्, फ्रिजः क्व गतः इत्यादिकं सर्वम् अस्पष्टम् एव आसीत् ।

ततः केषाञ्चित् मासानाम् अनन्तरं जागतिकं युद्धं समाप्तम् । मेन्नरिङ्गेण एकं पत्रं प्राप्तम् । तत्रत्यं विषयं पठितवता तेन आत्मनः दृष्टौ एव विश्वासः न प्राप्तः । वस्तुतः फ्रिजस्य कथा अवास्तविकी काल्पनिकी वा न आसीत् । जर्मन्गुप्तचर-विभागे अतिसमर्थः गुप्तचरः आसीत् सः । जागतिके युद्धे तेन विशिष्टं पात्रं निरूढम् आसीत् ।

सः ग्रीकः आसीत् फ्रिजः एव । सैनिक-वेषधारिणी आसीत् तस्य पत्नी । केषाञ्चित् वर्षाणाम् अनन्तरं ब्रिटिषाधीने प्रदेशे कस्मिंश्चित् उपाहारगृहे फ्रिजः मन्नेरिङ्गः च आकस्मिकतया मिलितौ । तौ परस्परम् अभिज्ञातवन्तौ अपि । परस्परमुखं दृष्ट्वा उभाभ्याम् अपि मन्दहासः प्रकटितः । किन्तु तयोः केनापि किमपि न उक्तम् ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५० पारितोषिकत्वेन



**अधस्तनां कथां पठन्तु –**

कश्चन पर्वतः । तस्य शिखरे अस्ति देवालयः । तं देवालयं प्रति गच्छन्तः सन्ति बहवः यात्रिणः । पर्वतारोहणरूपं तत् प्रयाणं नीरसम् आसीत् । मध्येमार्गं कश्चन अपरम् अपृच्छत् – ''कुतः आगतं भवता ?'' अपरः अवदत् – ''बिलासपुरतः'' ''अहम् अपि बिलासपुरवासी एव । तत्र कस्मिन् भागे निवसति भवान् ?'' ''पूर्वभागे'' ''अहो, आश्चर्यम् ! अहमपि तस्मिन् एव भागे निवसामि । पूर्वभागे कुत्रास्ति भवतः गृहम् ?'' ''तत्र शिवमन्दिरम् अस्ति खलु ? तस्य वामभागे स्थितं तृतीयं गृहं मम'' तदा अपरः अवदत् – ''इदं तु परमाश्चर्यम् ! मया अपि शिवमन्दिरस्य वामभागे तृतीये गृहे एव वासः क्रियते ।''

**तयोः सम्भाषणम् अग्रे कथं प्रवृत्तं स्यात् इति ऊहां कुर्वन्तु भवन्तः ?**

- आकस्मिकांशः कोऽपि किं तत्र योजनीयः अस्ति ?
- अन्ये यात्रिकाः किम् एतस्मिन् सम्भाषणे विलक्षणतां कामपि दृष्टवन्तः ?

स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् –

**अन्तिमः दिनाङ्कः ३०, मार्च, २००४**

नाम ------------------------वयः ------- जन्मदिनाङ्कः ---------

विद्यालयः --------------------------------- कक्ष्या ---------

गृहसङ्केतः ------------------------------------------------

--------------------------------------------------------

------------------------- Pincode --------------

पोषकस्य हस्ताक्षरम् — भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



चन्दमामा प्रस्तुतीकरोति







# जजपुरम्

## पवित्रा नगरी

Sponsored by



# जजपुरम्

## यच्चास्ति पवित्रा यागभूमिः

पूर्वं कस्मिंश्चित् काले गयासुरः नाम कश्चन प्रबलः दैत्यराजः आसीत् । किन्तु सः अन्ये दैत्याः इव न आसीत् । सः विष्णोः परम-भक्तः आसीत् । तस्य मरणस्य अनन्तरं तदीयस्य राजधानी-नगरस्य नाम 'गया' इत्येव ख्यातं जातम् । तत् गयानगरं पवित्रं तीर्थक्षेत्रम् अपि जातम् । महत् पापं कृतवान् अपि जनः यदि गयाक्षेत्रस्य दर्शनं करोति तर्हि सर्वेभ्यः पापेभ्यः विमुक्तः भवति इति विश्वासः जनेषु उत्पन्नः । किमधिकं वदेम, गयासुरस्य स्पर्शात् सर्वाणि पापानि विनंक्ष्यन्ति, विष्णु-भक्तता च सेत्स्यति इत्यपि जनाः




विरजादेवी, जजपुरम्

भावितवन्तः । अतः ये गयाम् आगत्य गयासुरस्य शरीरं स्प्रष्टुं समर्थाः भवन्ति स्म ते ततः गन्तुं न इच्छन्ति स्म । यदा मरणं प्राप्यते तदा पापलेपरहिताः सन्तः ते पवित्रात्मानः साक्षात् मोक्षम् एव प्राप्नुवन्ति स्म ।

कदाचित् देवाः ऋषयः च चिन्तितवन्तः यत् कश्चन विशेषयागः करणीयः इति । एतस्य यागस्य 'आधारः' कः स्यात् इति जिज्ञासा उत्पन्ना । यत्र यागाग्निः प्रवर्त्यते तत्रत्यः आधारः यदि परमपवित्रः न स्यात् तर्हि यागस्य फलं न प्राप्येत एव ।

'तत् आधरस्थलं तावत् पवित्रं स्यात्, यावत् गयासुरस्य शरीरं पवित्रम् अस्ति' इति चर्चा प्रचलति स्म । एषा वार्ता गयासुरेणापि श्रुता । अतः सः स्वस्य शरीरम् एव यागस्य आधारत्वेन परिकल्पयितुं ससन्तोषं सन्नद्धः जातः । सः भूमौ शयनम् अकरोत् । तस्य शरीरस्य उपरि सः विशिष्टः यागः अनुष्ठितः । तस्य परिणामतः तस्य दैर्घ्यं नितरां प्रवृद्धम् । तस्य शिरः गयाक्षेत्रे अतिष्ठत् । तदीयः नाभिभागश्च उत्कल(ओरिस्सा)राज्यस्य वैतरणीनद्याः तीरे अतिष्ठत् । तस्मात् सः प्रदेशः 'नाभिगया' इति ख्यातः जातः ।

प्राचीनाः ऋषयः एतत्सर्वं जानन्ति स्म । नाभिगयायां यदि कोऽपि यागः आचर्यते तर्हि अभीष्टस्य सिद्धिः निश्चयेन भविष्यति इत्यपि ते जानन्ति स्म । अतः एतादृशाय यागकार्याय अतिप्रशस्तः प्रदेशः इति परिगण्यते नाभिगया । सृष्टिकर्ता ब्रह्मा अपि अत्र कञ्चन यागं कृतवान् तस्मात् एव । ब्रह्मणा प्रवर्तितात् अग्नितः प्रखरं तेजः उत्पन्नम् । ततः भगवती विरजादेवी समुत्पन्ना । यागं कुर्वन्तः ऋषयः तां प्रार्थितवन्तः यत् भवत्या अत्र स्थिरतया वासः करणीयः इति । भगवती एतत् अङ्गी-कृतवती । तस्मात् दिनात् तस्याः वासः तत्र आरब्धः । पवित्रस्य तस्य नगरस्य आराध्यदेवता जाता सा ।



तस्मिन् स्थाने निरन्तरं यज्ञाः प्रवर्तन्ते स्म । तस्मात् गच्छता कालेन तत् 'यज्ञपुरम्' इति प्रसिद्धं जातम् । यज्ञयागौ समानार्थकौ । अतः तत् स्थलं 'यागपुरम्' इत्यपि ख्यातम् अस्ति । यकारः जकारत्वेन उच्चार्यते तत्र । तस्मात् 'जजपुरम्' इति अद्य नाम श्रूयते तस्य । पुराणेषु एतत् स्थानं विरजाक्षेत्रम् इति कीर्तितं दृश्यते । आ शताब्दीभ्यः प्रेक्षणीयतीर्थक्षेत्रत्वेन ख्यातम् अस्ति एतत् क्षेत्रम् । उत्कलराज्यस्य परम्पराविशेषज्ञः प्रा॰ थामस् युजिन् डोनाल्डसनः वदति - ''ओरिस्साराज्यस्य उत्तरपूर्वतीरप्रदेशे पञ्च तीर्थक्षेत्राणि सन्ति । तानि पञ्चानां देवानां सम्बन्धं वहन्ति । भुवनेश्वरं शिवक्षेत्रम् अस्ति । पुरी भगवतः विष्णोः क्षेत्रम् । कोणार्कप्रदेशः सूर्यस्य क्षेत्रम् । महाविनायकक्षेत्रं गणेशसम्बद्धम् अस्ति । जजपुरं



*विरजादेव्याः आलयः*

(यागपुरम्) च देवीसम्बद्धम् अस्ति'' इति ।

पूर्वम् ओरिस्साराज्यं कलिङ्गम्, उत्कलम् उद्रदेशः इत्यादिभिः नामभिः निर्दिश्यते स्म । तदा तस्य राजधानी आसीत् जजपुरम् । षष्ठे शतके ययातिकेसरी (जजातिकेशरी) तत् राज्यं पालयति स्म । सः कस्यचन विशिष्टस्य यागस्य निमित्तं कान्यकुब्जतः सहस्रं ब्राह्मणान् आनायितवान् । सः तद्वंशजाः च सम्भूय एकं महास्तम्भं निर्मापितवन्तः । तस्य शिखरे विष्णोः वाहनभूतस्य गरुडस्य प्रतिमा प्रतिष्ठापिता । एषः स्तम्भः 'शुभस्तम्भ'नाम्ना निर्दिश्यते ।



शुभस्तम्भः

कस्मिंश्चित् कालखण्डे जजपुरं तान्त्रिकशास्त्राध्ययनसम्बद्धं प्रसिद्धं केन्द्रम् आसीत् । तन्त्रशास्त्रस्य अध्ययनाय भारतस्य विविधेभ्यः कोणेभ्यः, टिबेट्नेपालप्रभृतिभ्यः देशेभ्यश्च जनाः आगच्छन्ति स्म एतत् केन्द्रं प्रति । विरजामन्दिरम् एतादृशस्य कार्यस्य केन्द्रम् आसीत् । एतत् मन्दिरं परितः अन्यानि बहूनि मन्दिराणि अपि आसन् । तान्त्रिकपूजासम्बद्धाः भैरवाः भैरव्यः चापि अत्र आसन् बहवः । इदानीं तत्प्रदेशे ये प्राचीनमन्दिराणाम् अवशेषाः उपलभ्यन्ते ते प्राचीनमन्दिराणां वैभवं कलात्मकतां च ज्ञापयन्ति ।



जगन्नाथमन्दिरम्

किम् अत्रत्यानि मन्दिराणि कालप्रभावतः एव विनष्टानि ? न। षोडशे शतके समीपस्थराज्येभ्यः आगतः आक्रामकः महता सैन्येन सह आगत्य ओरिस्साराज्यस्य सहस्राधिकानि मन्दिराणि विनाशितवान्। जजपुरविषये तस्य विशेषदृष्टिः आसीत्। अत्र सः उन्मत्तः इव व्यवहरन् सर्वाणि मन्दिराणि अनाशयत्। शिल्पानि प्रध्वंसितवान्। आराध्यमूर्तीः धूलिसात्कृतवान्। यासां मूर्तीनां नाशनं कर्तुं न शक्तं तासां विरूपता कल्पिता तेन। तस्य एतादृशं कृत्यम् अवरोद्धुं केनापि न शक्तम्। शुभस्तम्भस्य उपरि स्थिता गरुडमूर्तिः अधः पातिता तेन। किन्तु तस्य स्तम्भस्य विनाशने तु सः असमर्थः जातः।

एवं नाशं कृतवतः नाम कालापहाड् इति । एतत् तस्य वास्तविकं नाम न । केचन इतिहासज्ञाः एव तदीयं वास्तविकं नाम जानन्ति, न तु सर्वेऽपि । सः आसीत् बङ्गालवासिनः अफगान्सुल्तानस्य सेनानायकः सुलेमान् कर्दानी इति । पुरीस्थस्य भगवतः जगन्नाथ-मन्दिरस्य प्रध्वंसने अपि तेन प्रयासः कृतः । भुवनेश्वरे स्थितानि रमणीयानि शिल्पानि अपि तेन विनाशितानि । गुवाहती-समीपस्थं भगवत्याः कामाक्ष्याः मन्दिरम् अपि तेन आक्रान्तम् । किन्तु अन्ते अकबरचक्रवर्तिनः सैन्येन सह प्रवृत्ते युद्धे सः मरणं प्राप्तवान् ।

प्राचीनवैभवस्य स्मृतिः इदानीम् अपि पूर्णतः विनष्टा तु न । पूर्वं यज्ञयागादीनां निमित्तं बहुधा उपयुक्तः दशाश्वमेधघट्टः इदानीम् अपि सुस्थितौ अस्ति प्रायः । अत्र पूर्वं देवाः ऋषिमुनयः च स्नान्ति स्म । तादृशस्य स्थलस्य नाम अस्ति 'सप्तरेखा' इति ।
वैतरणीनद्याः तीरे स्थितः वराहनाथमण्डपः
सप्तमातृकामण्डपः च प्राचीनां



पुण्य-परम्परां स्मारयतः अद्यापि । सप्तमातृकामण्डपे स्थिताः सप्त मातरश्च –

ऐरावताधिरूढा शुभेशा सालङ्कारा वज्रहस्ता इन्द्राणी, गरुडासना शान्तहस्ता वैष्णवी, वृषारूढा त्रिशूलधारिणी चन्द्ररेखाविभूषणा माहेश्वरी, शिखिवाहना कान्तारूपा कौमारी, हंसपृष्ठा स्मेरानना सर्वाभरणभूषिता ब्राह्मी, महिषासना वराहवदना वाराही, नग्नदेहा सर्पभूषितकबरी मुण्डमालिनी भीषणा चामुण्डा च । एतानि नामानि याज्ञिकपरम्परानुसारीणि तान्त्रिकपरम्परया सहितानि च । सविशेषणानि एतानि नामानि तत्तद्देवता-स्वरूपं स्पष्टतया स्मारयन्ति ।


नृत्यन्ती भैरवी चामुण्डा

भगवत्याः विरजायाः अन्याः अपि देवताः उत्पन्नाः । ताः च नव दुर्गाः, अष्ट चण्ड्यः, चतुष्षष्टिः योगिन्यः इत्यादयः । एतासां सर्वासां कृते अपि मन्दिराणि सन्ति अत्र ।

अग्नीश्वररूपेण अत्र शिवस्य पूजा प्रचलति । आश्चर्यं नाम अग्नीश्वरस्य वर्णः दिने दिने परिवर्तते । एतत् वर्ण-परिवर्तनं प्रत्यक्षं दृष्टवन्तः बहवः सन्ति । एतत् वर्णपरिवर्तनम् आ बहुभ्यः शतकेभ्यः प्रचलत्

अस्ति इति वदन्ति स्थलपुराणानि ।

यदा अत्र तान्त्रिकविद्यायाः प्रभावः क्षीणः जातः तदा बौद्धमतप्रभावः प्रवृद्धः । जजपुरतः अनतिदूरे त्रयः पर्वताः सन्ति । तेषु बौद्धमतसम्बन्धीनि स्मारकाणि बहूनि प्राप्यन्ते । तेषां त्रयाणां पर्वतानां नाम - उदयगिरिः, ललितगिरिः, रत्नगिरिः चेति ।



*त्रिलोचनेश्वरदेवालयः*

चीनायात्रिकः ह्युयेन्त्साङ्गः एतं प्रदेशं पुष्पगिरिः इति निर्दिष्टवान् दृश्यते । 'ओरिस्साराज्यस्य नलन्दा' इति ख्यातम् अस्ति अयं प्रदेशः । अत्रत्ये अन्यतमे पर्वते कश्चन स्तूपः आसीत् । यदा एषः स्तूपः विनष्टः तदा तत्र काचन पेटिका प्राप्ता । तस्यां बुद्धस्य शरीरस्य अवशेषाः प्राप्ताः । एषा पेटिका इदानीं सर्वकाराधीना अस्ति ।

एतेषु पर्वतेषु स्थिताः बुद्धमूर्तयः बौद्धगाथाः स्मारयन्ति । एतानि स्थानानि ध्यानस्य तपसश्च आधारस्थानानि यथा आसन् तथैव सांस्कृतिकशैक्षणिककेन्द्राणि अपि आसन् इत्येषः अंशः उत्खननात् प्रमाणितम् अस्ति । अत्र सहस्राधिकजनानाम् आवासः भवति स्म इति तर्क्यते । अतः स्पष्टं भवति यत् बौद्धसंस्थानानां जजपुरस्य च



*उदयगिर्याश्रमः*

परस्परव्यवहारः नैरन्तर्येण प्रचलति स्म इति । जजपुरे अपि केचन बौद्धमूर्तयः प्राप्ताः सन्ति ।

अत्र कस्मिंश्चित् कालखण्डे तान्त्रिकविधीनां, बौद्धमतीयविधीनां च मिश्रणं जातम् । तस्मात् नूतनः कश्चन क्रमः अत्र व्यवहारपथम् आगतः । एवं जजपुरं मूर्तिनिर्माणक्षेत्रे नूतनानां प्रयोगाणाम् आधार-भूमिः जातम् । तस्मात् अनन्यलभ्यया शैल्या मूर्तिनिर्माणं कृतं दृश्यते अत्र ।

प्रसिद्धः इतिहासज्ञः गोराचन्द पट्नायकः वदति – ''जजपुरस्य हनुमदेश्वरमन्दिरस्य बाह्यभित्तौ महिषासुरमर्दिनीशिल्पं यत् प्राप्तं तत् अतिविशिष्टम् अस्ति । ... सा अष्टहस्तत्वेन दर्शिता अस्ति अत्र । वामहस्तम् उन्नीय राक्षसस्य बाहू विमर्दयन्ती अस्ति सा । अन्यैः

हस्तैः सा खड्ग-चक्र-बाणवारक-धनुर्बाण-सर्पादीन् गृहीतवती अस्ति । तया हस्तेन यः सर्पः गृहीतः सः राक्षसं दशन् अस्ति । सः राक्षसः तु मानवशरीरः । किन्तु सः महिषमुखः अस्ति । तस्याः वाहनं सिंहः घोरस्य तस्य राक्षसस्य उपरि आक्रमणं कृतवान् दृश्यते ।''

प्रांध्यापकस्य डोनाल्डसनस्य वचनम् अत्र स्मरणयोग्यम् अस्ति । सः वदति - ''खदीपाडाप्रदेशे बह्व्यः अतिबृहत्यः प्रतिमाः प्राप्ताः सन्ति । स च प्रदेशः जजपुरतः सप्तमैल्दूरे अस्ति । जजपुरपरिसरे अपि महाकारिकाः उत्कलीयबौद्धप्रतिमाः प्राप्ताः सन्ति । तत्र बोधिसत्त्वस्य काचित् प्रतिमा अपि प्राप्ता अस्ति । बोधिसत्त्वः पद्म-पाणिः सन् उपविष्टः दृश्यते तत्र । तस्याः प्रतिमायाः पादभागः पीठ-



रत्नगिरिः



भागः च विनष्टः अस्ति । भाग-द्वयविरहिता मूर्तिः एव षोडश-पादोन्नतिपरिमिता अस्ति ! एवं तर्हि भवन्तः एव ऊहां कुर्वन्तु यत् समग्रायाः मूर्तेः औन्नत्यं कियत् स्यात् इति । जजपुरं महायानस्य वज्रयानस्य (तन्त्रशास्त्रसम्बद्धस्य) च केन्द्रम् आसीत् । वैतरणीनद्याः अपरस्मिन् तीरे सोलमपुरम् अस्ति । तदपि बौद्धमतस्य उत्तमं केन्द्रम् आसीत् । तस्मिन् ग्रामपरिसरे पञ्चविंशत्यधिकाः अवशेषाः इतस्ततः विकीर्णाः दृश्यन्ते ।''

सः एवं निर्णयं श्रावयति - ''जजपुरे अत्यधिकप्रमाणेन देवालयानां शिल्पानां च विनाशनं जातम् । तथापि कानिचन दैवकृपया अवशिष्टानि सन्ति अद्यापि । यानि सौभाग्यवशात् अवशिष्टानि सन्ति तानि उन्नताकारकाणि रमणीयानि च । एतानि प्रमाणीकुर्वन्ति यत् एतत् नगरं पूर्वं भव्यां परम्परां वहति स्म, धार्मिककेन्द्रं च आसीत्, तत्रापि विशिष्य शाक्तपरम्परायाः उत्कृष्टं प्रमुखं च केन्द्रम् आसीत् इति । भगवत्याः देव्याः पूजाक्षेत्रम् अपि अस्ति एतत् ।''

## वारुण्युत्सवः

जजपुरस्य प्रमुखः उत्सवः एषः । एतस्मिन् उत्सवदिने लक्षशः जनाः वैतरणीनद्यां स्नानं कुर्वन्ति । वारुण्युत्सवः एषः त्रिविधः । चैत्रमासस्य कृष्णपक्षे (मार्च्-एप्रिल्मासयोः मध्यकाले) वरुणः यदा सम्मिलितः भवति तदा वारुण्युत्सवः आचर्यते । सः एव यदि शनिवासरे भवति तर्हि 'महावारुणी' इति निर्दिश्यते । सा महावारुणी मुहूर्तविशेषे यदि भवति तर्हि 'महामहावारुणी' इति उच्यते । तस्मिन् काले नद्यां स्नानं यदि क्रियते तर्हि सर्वपापेभ्यः मुक्तिः प्राप्यते इति जनाः भावयन्ति ।

## त्रिवेणी अमावास्या

विरजायाः जन्मदिनत्वेन त्रिवेणी-अमावास्या आचर्यते माघमासस्य अमावास्यायाम् (जनवरीमासे फेब्रवरीमासे वा) तस्मिन् दिने देवी सावित्रीवेषेण अलङ्क्रियते । निरन्तरेण गायत्रीमन्त्रोच्चारेण सा पूज्यते च ।

## रथयात्रा

विरजादेव्याः रथयात्रा नवदिनात्मिका भवति । आश्वयुजस्य (सप्टेम्बर्-अक्टोबर्) शुक्लपक्षस्य प्रतिपदि एतस्य उत्सवस्य आरम्भः । एतस्यां रथयात्रायां सुन्दरतया अलङ्कृते रथे 'दण्डः' (रजतेन सुवर्णेन च विभूषितः काष्ठमयः दण्डः) स्थाप्यते ।

भगवत्याः स्तम्भेश्वर्याः प्रतीकरूपेण स्थाप्यते एषः दण्डः । नवसु अपि दिनेषु रथः नववारं मन्दिरस्य प्रदक्षिणं करोति । अन्तिमे दिने (महानवमीतिथौ) मध्यरात्रे 'नरपाड'प्रदेशे 'लखविन्दुसमारम्भः' प्रचलति । एषः एव 'लखविन्दपडिया' इति निर्दिश्यते । एतत् स्थानं मन्दिरस्य उत्तरपूर्वकोणे अस्ति ।

भगवत्या सह आगताः अर्चकाः चतसृषु दिक्षु चतुर्णां बाणानां प्रयोगं कुर्वन्ति । ततः उत्सवमूर्तिः मध्यरात्रे अन्धकारे मन्दिरं प्रति आनीयते । गर्भगृहस्य द्वारं च पिधीयते । रथस्थायाः विरजायाः दर्शनं यैः क्रियते ते सर्वेभ्यः पापेभ्यः पुनर्जन्मतः च मुक्ताः भवन्ति इति अस्ति जनानां विश्वासः ।



# जजपुरपरिसरस्थानि स्थानानि > > > > > >







## छतिया

छतियास्थं मन्दिरं यात्रस्थलेषु अन्यतमम् अस्ति । अत्र धार्मिक-विधिपूर्वकं जगन्नाथस्य पूजा वैभवेन प्रचलति । अस्य देवालयस्य वैशिष्ट्यम् अस्ति यत् भगवतः जगन्नाथस्य वामपार्श्वे देवी सुभद्रा उपविष्टा दृश्यते ।

## अशोकझर्

'महागिरि'पर्वतश्रेण्याः हरिन्मयेषु अरण्येषु अस्ति एतत् स्थलम् । भगवतः अशोकेश्वरस्य नाम्ना सम्बद्धम् अस्ति एतदीयं नाम । परमरमणीयं स्थानम् एतत् विहारयात्रायाः निमित्तं समुचितं स्थानम् अपि ।

## चण्डिखोल्

बाबा भैरवानन्दस्य आश्रमस्य पृष्ठभूमिकायां स्थितः अस्ति अयं पर्वतः । आरोग्यदायकस्य परिसरस्य निमित्तं चण्डिखोल् ख्यातम् अस्ति । सप्ताहान्त्ये विहारयात्रां कर्तुं सुयोग्यं स्थलम् अस्ति एतत् अपि ।

## मुल्लपाल्

भगवतः लिङ्गेश्वरस्य मन्दिरम् अस्ति अत्र । शारीरकव्याधीनां निवारणाय सहस्रशः भक्ताः प्रतिदिनम् एतत् मन्दिरम् आगच्छन्ति ।

## व्याससरोवरः

महर्षेः व्यासस्य नाम्ना सम्बद्धः अस्ति अयम् । ओरिस्सास्थाषु पवित्रेषु स्थलेषु अन्यतमम् अस्ति एषः । व्यासदेवस्य राघवदासस्य च प्रतिमा अत्र पूज्यते श्रद्धया । स्वस्य प्राणानां रक्षणाय दुर्योधनः एतस्मिन् सरसि निलीय स्थितवान् आसीत् इति जनाः भावयन्ति । माघमासस्य शुक्लपक्षस्य एकादशीतः सप्ताहं यावत् उत्सवः प्रचलति अत्र । जजपुरस्य सीमाप्रदेशे स्थितः व्याससरोवरः एकं पवित्रं यात्रास्थलम् । जगन्नाथमन्दिरम्, व्यासकुटीरः, सरस्तीरस्थं 'गुप्तगङ्गा' च अत्रत्यानि प्रमुखाणि प्रेक्षणीयानि स्थलानि ।

## गोकर्णिका

गोकर्णेश्वरमहादेवस्य आवासस्थानम् एतत् । गोकर्णिका पञ्चम-संख्याके राष्ट्रियमहामार्गे ब्राह्मणीनद्याः तीरे 'ज़रका'समीपे अस्ति । विहारयात्रार्थं समुचितं स्थानम् एतत् ।

## महाविनायकः

चण्डिखोल् पार्श्वे स्थिते महाविनायकमन्दिरे एकस्यैव लिङ्गस्य पञ्च मुखानि दृश्यन्ते । अत्र गणेशस्य पूजा क्रियते ।

## उदयगिरिरत्नगिरिललितगिरयः

एषः गिरित्रयात्मकः प्रदेशः बौद्धसंस्कृतेः स्थानम् अस्ति । चीनादेशस्य यात्री ह्यूयन् त्स्याङ्गः एतं प्रदेशं प्रवर्धमानस्य पुष्पगिरिनामकस्य बौद्धविश्वविद्यालयस्य स्थानम् इति अभिज्ञात-वान् । एतस्यां भूमौ प्राप्तः प्रभूतः इष्टिकाभग्नावशेषः, शिल्पकलायुक्ताः मूर्तयः च गतं वैभवं स्मारयन्ति । बुद्धस्य गुप्तमूर्तयः अपि अत्र दृष्टाः । एतेषु पर्वतेषु मुख्यभूतम् अस्ति - रत्नगिरिः । सुपरिष्कारोपेताः बुद्धमूर्तयः, विहारस्य बृहदाकारकाणि कलायुक्तानि द्वाराणि च गुप्तोत्तरसमयस्य बौद्धशिल्पकलावैभवं द्योतयन्ति ।



## जजपुरं प्राप्तुं मार्गः > > > > > > >

- समीपस्थं विमानस्थानकं भुवनेश्वरीयं, यच्च १२० कि.मी. दूरे अस्ति ।
- कोल्कता-चेन्नैमार्गे ३५ कि.मी. दूरे जजपुरकियोञ्झारमार्गे रेल्वेस्थानकम् अस्ति । एतत् एव समीपतरं रेल्वेस्थानकम् ।
- कटक-भुवनेश्वर-कोलकतानगरेभ्यः जजपुर प्रति गमनाय सर्वर्तुप्रवासयोग्यः मार्गः अस्ति । सर्वदा बस्यानानि प्राप्यन्ते जजपुरगमनाय ।

## वासव्यवस्था > > > > > > >

- विरजा पान्थशाला (ओरिस्साप्रवासोद्यमसम्बद्धा)
  दू - ०६७२८ - २२२०२९
- मोनोरिलश् वसतिकेन्द्रम्
  दू - ०६७२८ - २२२१३४
- होटेल् सत्य
  दू - ०६७२८ - २२३७५१
- होटेल् आश्रय
  दू - ०६७२८ - २२४२४३

साहाय्यार्थं सम्पर्क्यताम् -
विरजापान्थशाला, जजपुरम् (०६७२८-२२०२९),
प्रवासिकेन्द्रम्, जे.के.रोड् (०६७२८-२२०२४२),
प्रवासिकेन्द्रम्, कटकरेल्वेस्थानकम्
(०६७१-६२०५०७), प्रवासिकार्यालयः,
कटक (०६७१-२३१२२२५)

# Raghurajpur:
# A Legacy of Creativity





10kms from Puri and 50 kms from Bhubaneswar stands Raghurajpur - the simple but highly acclaimed coconut-palm- shaded village... Silent like the gentle dew that falls in the morning, the art of patachitra, revitalised from family sketch - books, has been handed down from generation to generation. This idylic village, by the southern bank of river Bhargavi, is a rare village in India, where each family is engaged in the profession of preparing some handicraft or other... be it pata painting, ganjapa, palm leaf engravings, stone carvings, wood carvings or be it tusser painting. Many of the saviours of this art have been honoured by National Awards.







A living museum of art, tourists can see the artists, ceaselessly at work . The deft fingers of the master craftsmen aided by their family members work on this fascinating and communicative form of art.

So... it's time to lose yourself in the real Indian village of creativity and wander in the elegant pastures of Aestheticism and Art, of course, with a capital "A".













Explore
ORISSA
**The soul of India**






**For more information contact**: Director, Tourism; Paryatan Bhavan
Bhubaneswar-751014, Orissa, India, Tel: (0674) 2432177, Fax: (0674) 2430887
e.mail:ortour@sancharnet.in, website:www.orissa-tourism.com
Tourist Offices; **Chennai:** Tamilnadu Tourism Complex, Ground Floor
Near Kalaivanar Arangam, Wallajah Road, Chennai - 600002, Ph: (044) 25360891
**Kolkata**: Utkal Bhawan 55, Lenin Sarani, Pin-700013, Tel: (033) 22443653
**New Delhi:** Utkalika, B/4 Baba Kharak Singh Marg, Pin - 110001, Telefax (011) 23364580






# राज्ञः स्वेदस्य धारातः उत्पन्नम्

एषा काचित् विशिष्टस्य ब्राह्मणस्य कथा । सः राज्ञा परिश्रमेण यत् अर्जितं भवति तत् एव स्वीकरोति स्म, न तु कोषतः दीयमानम् ।

कश्चन दानशीलः राजा आसीत् । दानार्थमेव तेन काचित् व्यवस्था कृता आसीत् । साहाय्यं सम्प्रार्थ्य तस्य समीपम् आगतः कोऽपि रिक्तहस्ततया न गच्छति स्म । योग्यान् जनान् अन्विष्य तेन अनेके पुरस्काराः उपाधयः च दीयन्ते स्म । द्रष्टुम् आगतानां निर्धनानां प्रजानां स्यूतान् आहार-वस्तुभिः वस्त्रैः च पूरयित्वा एव प्रेषयति स्म सः ।

नूतनवर्षारम्भस्य दिनं तत् । समारम्भस्य अन्ते प्रजाः महाराजतः अमूल्यानि उपायनानि प्राप्तुं पङ्क्तिशः स्थिताः आसन् । एकोऽपि निराशः भूत्वा न प्रतिगतवान् । सर्वेषां निर्गमनस्य अनन्तरमपि राज्ञा कश्चन ब्राह्मणः दृष्टः । दर्शनेनैव ज्ञायते स्म यत् सः ब्राह्मणः धनिकः न, अपि तु दारिद्र्येण पीडितः इति । अत्यन्तं शान्तेन चित्तेन स्वस्य पर्यायं प्रतीक्षमाणः आसीत् सः । इतोऽपि वितरणयोग्यानि अनेकानि उपायनानि तत्र राशिरूपेण पतितानि आसन् ।

राजा तं पृष्टवान् - ''वदतु पण्डितवर्य ! अहं भवते किं ददानि ? वस्त्राणि, आहारः, उत मुक्ताहारः ?'' इति ।

तदा सः ब्राह्मणः उक्तवान् - ''महाराज, भवदुक्तेषु किमपि न अपेक्षितं मह्यम् । स्वेदधारां प्रवाह्य आर्जितं किमपि यदि भवत्समीपे अस्ति तर्हि तादृशम् एव अहं भवत्तः स्वीकर्तुम् इच्छामि'' इति ।

एतत् श्रुत्वा राजा अत्यन्तम् आश्चर्य-चकितः अभवत् । क्षणं यावत् स्तब्धः अपि अभवत् सः । 'कश्चित् एवं निर्भयतया प्रश्नं कुर्यात्' इत्यपि न ऊहितवान् आसीत् सः । तथापि सः 'ब्राह्मणस्य कथने तथ्यम् अस्ति' इति चिन्तितवान् । राशिरूपेण स्थापितानि उपायनानि तेन अवलोकितानि । तेषु एकम्

अपि तेन परिश्रमेण आर्जितेन धनेन क्रीतं न आसीत् ।

राजकोषस्य सम्पदाम् उपयुज्य तानि वस्तूनि आनीतानि आसन् । तत् धनं तु प्रजाभिः एव कररूपेण दत्तम् आसीत् । अतः राजा उक्तवान् - ''पण्डितवर्य ! मदीया स्वकीया सम्पत् इति प्रतिपादयितुं योग्यं किमपि वस्तु अत्र नास्ति । तथापि अत्र दृश्यमानेषु वस्तुषु यत् किमपि याचताम् इति प्रार्थये । यत् भवान् इच्छति तदहम् आदरपूर्वकं भवते समर्पयामि । भवान् यस्य नामोल्लेखनं करोति तत् वस्तु भवदधीनं भविष्यति निश्चयेन'' इति ।

ब्राह्मणः पुनश्चिन्तनं किमपि अकृत्वा झटिति उक्तवान् - ''नैव महाराज, अहम् एतेषु कस्यापि स्पर्शम् अपि न कर्तुं न इच्छामि । अहं न्याय्येन आर्जितं योग्यं धनम् एव स्वीकर्तुम् इच्छामि'' इति ।



'एतादृशे शुभे अवसरे एषः ब्राह्मणः रिक्तहस्ततया यदि प्रतिप्रेष्येत तर्हि तत् युक्तं न स्यात् । अवमानाय भवेत् तत् । अतः ब्राह्मणस्य तोषणार्थं यथाशक्ति प्रयत्नः करणीयः' इति राज्ञा निश्चितम् । किन्तु तदर्थं कश्चन कालः अपेक्षितः आसीत् । अतः सः ब्राह्मणम् उद्दिश्य - ''पण्डितवर्य ! तथैव भवतु । कृपया श्वः पुनः आगच्छतु । अहं परिश्रमेण अर्जनं कृत्वा भवते निश्चयेन किमपि दास्यामि'' इति उक्तवान् ।

ब्राह्मणः राजानम् आशिषा अनुगृह्य ततः निर्गतवान् । तस्य मुखे मन्दहासः आसीत् ।

राजा स्वस्य प्रकोष्ठं गत्वा सामान्यानि वस्त्राणि धृत्वा बहिरागतवान्, कार्यम् अन्वेष्टुं निर्गतवान् च । किन्तु हन्त ! केनापि तस्मै कार्यं न दत्तम् एव !

अन्ते सः समुद्रतीरं प्राप्तवान् । तत्र केचन धीवराः जालं गृहीत्वा मत्स्यग्रहणार्थं सज्जाः आसन् । यदा छद्मवेषेण स्थितः राजा साहाय्यकरणस्य प्रस्तावं कृतवान् तदा धीवराः निराकृतवन्तः । अन्ते राजा कस्यचित् धीवरस्य अङ्गीकारं प्राप्तुं प्रयत्नं कृतवान् । सः धीवरः छद्मवेषेण स्थितस्य राज्ञः विषये अनुकम्पं प्राप्तवान् । तम् उद्दिश्य - ''महामत्स्याय एकं ताम्रनाणकं, लघुमत्स्याय एकां वराटिकां च दास्यामि । किम् एतत् अङ्गीक्रियते ?'' इति पृष्टवान् ।

अङ्गीकरणात् ऋते अन्यः मार्गः न आसीत् राज्ञः । अतः धीवरस्य नियमम् अङ्गीकृत्य सः जालं गृहीत्वा नौकाम् आरूढवान् । समुद्रे किञ्चिद्दूरं गत्वा जालं प्रसारितम् । बहुकालं यावत् तेन प्रतीक्षा करणीया अभवत् । अनन्तरं यदा जालम् आकृष्टं तदा सौभाग्यवशात् तत्र एकः महामत्स्यः, एकः लघुमत्स्यः च दृष्टौ । मत्स्यग्रहणे स्वस्य अनुभवः अपर्याप्तः इति महाराजेन ज्ञातम् आसीत् । आरात्रि प्रतीक्षा कृता चेदपि इतोऽपि अधिकस्य प्राप्तेः निरीक्षा एव न आसीत् । अतः सः धीवरस्य समीपं गतवान् । धीवरः एतं प्रतीक्षमाणः आसीत् । राजानं दृष्ट्वा धीवरः हसन् तस्य हस्ते नियमानुसारम् एकं ताम्रनाणकम् एकां वराटिकां च स्थापितवान् ।



राजा धन्यवादान् समर्प्य रक्षकभटाः यथा न जानीयुः तथा प्रासादं प्रत्यागतवान् । रक्षकाः आरात्रि जागरणं कृत्वा विश्रान्तिम् अनुभवन्तः आसन् ।

यदा राजसभायाः कलापाः आरब्धाः तदा प्रतीक्षारतः ब्राह्मणः अन्तः आहूतः ।

राजा तम् उद्दिश्य - ''पण्डितवर्य । ह्यः रात्रौ अहं कठोरं परिश्रमं कृत्वा पारिश्रमिक-रूपेण एकं ताम्रनाणकम्, एकां वराटिकां च प्राप्तवान् । एतदुभयं स्वीक्रियताम् । एतदतिरिच्य मम कोषतः अपि भवान् किमपि स्वीकर्तुम् अर्हति'' इति उक्तवान् ।

तदा ब्राह्मणः - ''नैव महाराज ! अहं राजकोषात् किमपि प्राप्तुं न इच्छामि । यतः न्याय्येन यदि पश्यामः तर्हि प्रजानाम् एव तस्य उपरि वास्तविकः अधिकारः । किन्तु भवता स्वेदप्रवाहेण आर्जितम् अहम् आनन्देन स्वीकरोमि । तत् ताम्रनाणकं, वराटिकां च अहं स्वीकर्तुं शक्नोमि किम् ?'' इति पृष्टवान् ।

राजा स्वस्य वस्त्रात् तदुभयमपि निष्कास्य ब्राह्मणाय दत्तवान् । ब्राह्मणः धन्यवादान् समर्प्य - ''भवता कष्टेन एतस्य अर्जनं कृतम् अस्ति इत्यतः मम दृष्ट्या एतदुभयमपि अत्यन्तम् अमूल्यम् अस्ति'' इति उक्त्वा सन्तृप्तभावेन गृहं प्रति प्रस्थितवान् ।

तस्य पत्नी राजगृहतः पत्युः प्रत्यागमनस्य निरीक्षायाम् एव आसीत् । यतः तस्याः पतिः द्वितीयवारं प्रासादं गतवान् आसीत् । पतिः

अमूल्यम् उपायनं प्रभूतं धनं च गृहीत्वा आगच्छेत् इति तस्याः निरीक्षा आसीत् ।

"आर्य ! किम् आनीतं भवता ?" इति सा पृष्टवती । पत्या हसता आगतम् इत्यतः महता कुतूहलेन पृष्टम् आसीत् तया ।

तदा ब्राह्मणः - "अमूल्यं किञ्चित् वस्तु मया आनीतम् अस्ति । महाराजतः एतादृशम् उपायनम् अद्यावधि अस्मिन् राज्ये केनापि न प्राप्तं स्यात्" इति उक्तवान् ।

ब्राह्मणस्य पत्नी पत्युः रिक्तं हस्तं दृष्ट्वा कुतूहलेन - "कृपया दर्शयतु तत्" इति उक्तवती ।

ब्राह्मणः उत्तरीयेण बद्धं ताम्रनाणकं वराटिकां च निष्कासितवान्, पत्न्याः हस्ते स्थापितवान् च । "एतत् महाराजेन कष्टेन आर्जितं धनम् । तस्य कोषागारे स्थितानाम् आभूषणानां, रत्नानां, सुवर्णनाणकानां च अपेक्षया अमूल्यम् एतत् । यतः तानि सर्वाणि प्रजाभ्यः प्राप्तानि । एतत् न तादृशम्" इति उक्तवान् सः ।

तदा ब्राह्मणस्य पत्नी खेदेन - "एतत् नाणकं वराटिकां च कः अपेक्षते ? भवान् तु एते अमूल्ये इति वदति । लोकः तु एतदुभयं तृणाय मन्यते" इति उक्त्वा तदुभयं गृहस्य पुरतः क्षिप्तवती ।

कलहं वर्धयितुम् अनिच्छन् ब्राह्मणः तूष्णीं स्थितवान्, नित्यकर्मणः आचरणार्थं ततः गतवान् च । तस्य पत्नी अपि गृहकृत्येषु निमग्ना अभवत् । द्वौ अपि ताम्रनाणकं वराटिकां च विस्मृत्य शयनं कृतवन्तौ ।

परेद्यवि प्रातः यदा उत्थितं तदा गृहस्य पुरोभागं दृष्ट्वा तौ आश्चर्यचकितौ जातौ । यत्र ताम्रनाणकं पतितम् आसीत् तत्र स्वर्णवृक्षः विराजते स्म । वृक्षे स्वर्णनाणकानि फलानि इव लम्बन्ते स्म । यत्र वराटिका पतिता आसीत् तत्र रजतवृक्षः आसीत् । तत्रत्याः शाखाः रजतवराटिकाभिः पूर्णाः आसन् ।

स्वर्णनाणकानि रजतवराटिकाः च अवचिन्वन्तौ तौ नितरां सन्तुष्टौ आस्ताम् । तत् स्वीकृत्य ब्राह्मणः स्वर्णकाराय दत्त्वा धनं प्राप्तवान् । क्षमां याचमानां पत्नीं सः अवदत् - "महाराजतः एतादृशम् उपायनं केनापि न प्राप्तम् इति अहम् उक्तवान् खलु" इति ।

तदारभ्य तौ दम्पती जीवने कामपि न्यूनतां न अनुभूतवन्तौ । धनिकौ सन्तौ तौ तृप्त्या आनन्देन च जीवनं यापितवन्तौ ।





# त्वराशीलता

विष्णुः शान्तायाः एकमात्रपुत्रः । तस्य पिता वाणिज्यं करोति स्म । विष्णुः पितुः तदेव वाणिज्यम् अनुवर्तयन् आसीत् महता कौशलेन । पुत्रे विष्णौ महती प्रीतिः शान्तायाः । कदाचित् भोजनं परिवेषयन्ती सा पुत्रम् अवदत् – ''आगामिनि नवरात्रपर्व-काले भवतः पितुः मित्रं रामावतारः स्वपुत्र्या सह अस्मद्गृहम् आगमिष्यति'' इति ।

''रामावतारः इत्येतत् नाम मया इतःपूर्वं न श्रुतम् इति भाति खलु ?'' इति आश्चर्येण अवदत् विष्णुः ।

तदा अङ्गीकारपूर्वकं शिरः चालयन्ती शान्ता अवदत् – ''भवतः जन्मनः पूर्वं सः अस्मत्प्रतिवेशी आसीत् । तद्गृहजनानाम् अस्माकं च मैत्री प्रगाढा आसीत् । रामावतारः तु मां भगिनीं मन्यते स्म । अहम् अपि तं भ्रातरं भावयामि स्म । किन्तु वाणिज्यनिमित्तं रामावतारः दूरप्रदेशं गतवान् । इतः निर्गमनानन्तरं तदीयं दर्शनं न आसीत् एव । बहूनां वर्षाणाम् अनन्तरम् अत्र आगच्छन् अस्ति सः । तस्य आगमनस्य अपरः अपि उद्देशः अस्ति । स्वपुत्र्यै उत्तमस्य वरस्य अन्वेषणाय अत्र आगच्छन् अस्ति सः । तदर्थम् एव स्वस्य आगमनस्य वार्तां मां सूचितवान् अस्ति सः'' इति ।

द्वित्रक्षणानां मौनस्य अनन्तरं सा पुनरपि अवदत् – ''भवान् उत्तमतया वाणिज्यं कुर्वन् अस्ति इति वार्तां श्रुतवान् अपि स्यात् सः । अतः भवते स्वपुत्रीं दातुम् इच्छति इति भाति । तस्य अत्र आगमनस्य एतदपि कारणं भवितुम् अर्हति'' इति ।

''आगच्छतु नाम । आगमनस्य अनन्तरं कारणं ज्ञायते'' इति अवदत् विष्णुः ।

''दीर्घकालस्य अनन्तरं तस्य परिवारस्य दर्शनं जायमानम् अस्ति इति तु महते सन्तोषाय । मया श्रुतं यत् रामावतारस्य पत्नी कलहशीला कृपणा च इति । कदाचित् तस्याः स्वभावः तत्पुत्र्यां सङ्क्रान्तं स्यादपि ।



प्रतिवेशिनी रुक्मिणी वदति स्म यत् सीतापतिः स्वपुत्रीं जलजां भवते दातुम् इच्छति इति । अतः रामावतारः यदि पुत्रीदानप्रस्तावं भवत्पुरतः उपस्थापयेत् तर्हि भवान् तं वदतु यत् एतद्विषये मया सहैव वार्तालापः करणीयः इति । माम् अपृष्ट्वा किमपि न निर्णेतव्यं भवता'' इति अवदत् शान्ता ।

नवरात्रोत्सवः उपस्थितः । रामावतारः पत्न्या, पुत्र्या पद्मया च सह विष्णोः गृहम् आगतवान् । शान्ता विष्णुः च तौ महता प्रेम्णा स्वागतीकृतवन्तौ । दर्शनमात्रेण पद्मायाः सौन्दर्यं शान्तायाः मनः आकर्षत् । तस्याः स्वभावः अपि उत्तमः एव दृष्टः । रात्रौ शान्ता पुत्रम् अवदत् - ''वत्स ! दृष्टं खलु पद्मायाः सौन्दर्यम् ! तस्याः स्वभावः अपि उत्तमः एव । एषा यदि मम स्नुषा भवेत् तर्हि वरं स्यात् । द्वित्रदिनाभ्यन्तरे रामावतारः यदि विवाहप्रस्तावं न उपस्थापयेत् तर्हि अहम् एव विवाहप्रस्तावं करिष्यामि'' इति ।

''अम्ब ! रामावतारादीनां मनसि किम् अस्ति इति अज्ञात्वा त्वरया किमपि कृतं चेत् अनौचित्यं स्यात्'' इति अवदत् विष्णुः ।

दिनद्वयस्य अनन्तरं सा पुनः विष्णुम् एकान्ते उक्तवती - ''पद्मा मह्यं नितराम् अरोचत । गृहकार्ये कुशला सा । रामावतारः एतावता अपि विवाहप्रस्तावं किमर्थं न कृतवान् इत्येव न ज्ञायते मया । अहम् एव अद्य विवाहप्रस्तावं करिष्यामि । भवतु किल ?'' इति ।

तदा विष्णुः स्वस्य असम्मतिं प्रदर्शयन् अवदत् - ''अम्ब ! ते सप्ताहं यावत् अत्र स्थास्यन्ति एव । किञ्चित् सहनया व्यवहरतु भवती । यदि त्वरा क्रियेत तर्हि तेषां दृष्ट्या वयम् अल्पाः स्याम । अस्माकं गौरवं नश्येत्'' इति ।

शान्ता प्रत्युत्तरं किमपि अदत्त्वा ततः निर्गतवती । विष्णुः अपि यदा ततः गन्तुम् उद्युक्तः तदा पृष्ठभागतः सम्बोधनं श्रुतं - 'विष्णो !' इति । तत् सम्बोधनं मधुरस्वरोपेतम् आसीत् । विष्णुः पृष्ठतः अपश्यत् । तदभिमुखम् एव आगच्छन्ती पद्मा अवदत् - ''भवतोः सम्भाषणं मया श्रुतम्'' इति ।

''मम माता सर्वत्र त्वरां प्रदर्शयति । अतः....'' इति सङ्कोचेन अवदत् विष्णुः ।

तदा पद्मा मन्दहासं प्रकटयन्ती अवदत् - ''भवतः मातुः मनसि यत् यत् अस्ति तत्

अवगतम् अस्ति मया । 'कीदृशी मम स्नुषा भवेत्, सा वार्धक्ये मम योगक्षेमं निर्वहेत् किम्' इत्यादयः आतङ्काः तस्याः । अतः शान्तस्वभावा काचित् कन्या दृष्टा चेत् सा चिन्तयति यत् एषा मम स्नुषा भवेत् चेत् वरं स्यात् इति । तदर्थं त्वरते सा । एषा त्वरा न दोषाय । भवान् तस्याः एकमात्रपुत्रः । तादृशस्य विवाहस्य दर्शने कस्याः वा त्वरा न स्यात् ?'' इति ।

विष्णुः प्रतिवचनं किमपि अवदन् मन्दहासपूर्वकम् अतिष्ठत् ।

पद्मा स्वस्य कथनम् अनुवर्तितवती - ''मानवानां स्वभावम् आदौ सम्यक् अवगत्य तदनन्तरम् एव तदनुगुणं व्यवहारः करणीयः । तदा एव कार्यसिद्धिः भविष्यति । मम पिता उत्तमरीत्या वाणिज्यं कुर्वन् धनं सम्पादितवान् । तस्य अल्पः अपि दुरुपयोगः तेन न कृतः । मम मातुः शीघ्रकोपः अधिकः । अतः जनाः तां कलहशीलां कृपणां च वदन्ति । अत्र आगमनस्य अनन्तरं मम पित्रा अवगतं यत् मातुः स्वभावः अत्रत्यैः बान्धवैः मित्रैः चापि स्पष्टतया एव अवगतः अस्ति इति । अतः सः भवतः मातुः पुरतः विवाह-प्रस्तावस्य उपस्थापने सङ्कोचम् अनुभवति । यदि भवतः माता स्वयम् एतं प्रस्तावम् उपस्थापयेत् तर्हि मम पितुः समस्या परिहृता भवेत्, सः कृतज्ञतां च वहेत्'' इति । एवं वदन्त्याः तस्याः कण्ठः गद्गदः जातः आसीत् । नेत्रे सजले जाते आस्ताम् । सा शिरः अवनमय्य स्थितवती ।

विष्णुः एकं पदम् अग्रे स्थापयित्वा तस्याः हस्तं स्वहस्तेन गृहीत्वा अवदत् - ''त्वराशीलता प्रदर्शिता न मात्रा, अपि तु मया । पूर्वापरम् अनालोच्य मया किमपि उक्तम् । क्षन्तव्यः अहम् । इदानीं तु भासते यत् त्वराकरणम् एव वरम् इति'' इति ।

''त्वराकरणं कस्मिन् विषये ?'' इति आश्चर्येण पृष्टवती पद्मा ।

''आवयोः विवाहस्य विषये । या मम मातुः मनः अपाहरत् तस्याः परिणयविषये त्वराकरणम् उचितम् एव भवेत् ननु ?'' इति हसन् उक्तवान् विष्णुः । लज्जया शिरः अवनमय्य ततः निर्गतवती पद्मा ।





# स्वर्णपात्रम्

पञ्चभ्यः कल्पेभ्यः पूर्वं बोधिसत्त्वः सौरवनामके राज्ये पात्रवणिग्रूपेण कार्यं कुर्वन् जीवनं करोति स्म । सः प्राचीनानि पात्राणि क्रीत्वा नूतनानां पात्राणां विक्रयणं करोति स्म । तस्मिन् एव राज्ये तादृशः एव अन्यः वणिक् अपि आसीत् । स तु महाकृपणः । तौ उभौ अपि मिलित्वा वाणिज्यं कुरुतः स्म ।

एकदा तौ आन्ध्रपुरनामकं ग्रामं प्राप्तवन्तौ । तत्र कश्चन वणिक्परिवारः आसीत् । पूर्वं स च परिवारः सम्पन्नः आसीत् । किन्तु इदानीं निर्धनः सः । तस्मिन् एका वृद्धा तस्याः पौत्री च निवसतः । उभे अपि भृत्यवृत्त्या जीवनं यापयतः स्म ।

तस्मिन् गृहे कानिचन एव पात्राणि आसन् । एकं सुवर्णपात्रम् अपि आसीत्, यस्य च उपयोगं तस्य परिवारस्य प्रधानवणिक् स्वजीवितकाले कृतवान् आसीत् । इदानीं तु तस्य उपयोगः केनापि न क्रियते स्म । तस्मात् मालिन्यावृतम् आसीत् तद् । तस्मात् वृद्धा तस्याः स्नुषा च न जानीतः यत् तत् पात्रं सुवर्णमयम् अस्ति इति ।

कृपणः वणिक् तस्मिन् मार्गे अटन् – 'पात्राणि.. पात्राणि..' इति वदन् गच्छन् आसीत् । तस्य ध्वनिं श्रुत्वा पौत्री अवदत् – ''अम्ब ! मह्यं किमपि दापयतु'' इति ।

''वत्से ! किं वा दापयेयम् अहम् ? विक्रेतुं योग्यं किमपि नास्ति एव गृहे । कस्यचित् विक्रयणं विना नूतनं क्रेतुम् अशक्यम्'' इति अवदत् पितामही ।

''अस्माकं गृहे एकं प्राचीनं पात्रम् अस्ति खलु । तत् विक्रीय किमपि दापयतु अम्ब !'' इति अवदत् पौत्री ।

तदा पितामही तं वणिजं गृहं प्रति निमन्त्रितवती । वणिजे तत् प्राचीनं पात्रं दत्त्वा –''एतत् स्वीकृत्य एतस्याः निमित्तं

किमपि ददातु भोः'' इति अवदत् ।

कृपणः पात्रं परीक्षादृष्ट्या अपश्यत् । 'एतत् सुवर्णमयम् एव' इति दर्शनमात्रेण सः अवगतवान् । तस्य मनसि दुराशा उत्पन्ना ।

कथञ्चित् एतत् अपहरणीयम् एव इति निश्चित्य सः वृद्धाम् उद्दिश्य - ''भगिनि ! एतत् पात्रं सर्वथा अनुपयोगि । किमपि मूल्यं नार्हति एतत् । अतः एतत् क्रीत्वा किं वा कुर्याम् अहम् ?'' इति वदन् पात्रं तत्रैव क्षिप्त्वा ततः निर्गतवान् ।

कृपणस्य वणिजः निर्गमनस्य किञ्चित्-कालस्य अनन्तरं बोधिसत्त्वः तं मार्ग प्रविश्य वृद्धायाः गृहस्य समीपमपि गत्वा - 'पात्राणि..पात्राणि..' इति उच्चैः अवदत् ।

एतत् श्रुत्वा पौत्री पितामहीम् अवदत् - ''मह्यं किमपि दापयतु कृपया'' इति ।

''वत्से ! गृहे तस्मात् प्राचीनात् पात्रात् ऋते अन्यत् किमपि नास्ति विक्रयणाय । एतस्य मूल्यम् एव नास्ति इति उक्त्वा एकः वणिक् तत् पात्रं क्षिप्त्वा गतवान् । एवं स्थिते किं वस्तु दत्त्वा नूतनं पात्रम् अहं क्रीणीयाम्'' इति खेदेन अवदत् वृद्धा ।

''अम्ब ! सः पूर्वतनः वणिक् दुष्टः आसीत् । एतस्य कण्ठस्वरः मधुरः । एषः सौम्यः अस्ति'' इति अवदत् पुत्री ।

एतत् श्रुत्वा वृद्धा बोधिसत्त्वं गृहं प्रति निमन्त्रितवती, तत् प्राचीनं पात्रं तस्मै दर्शितवती च । बोधिसत्त्वः तत् परीक्ष्य झटिति अवगतवान् यत् एतत् सुवर्णमयम् एव इति ।

अतः सः अवदत् - ''अम्ब ! एतत् पात्रं लक्षमुद्रामूल्यम् अर्हति प्रायः । एतदुचितानि वस्तूनि मत्समीपे न सन्ति'' इति ।

''वत्स! इतः पूर्वम् आगतः कश्चन - 'एतत् वराटिकामूल्यम् अपि नार्हति' इति



उक्त्वा पात्रं क्षिप्त्वा गतवान् । अतः एतत् स्वीकृत्य भवान् यत् इच्छति तत् दत्त्वा गच्छतु'' इति अवदत् वृद्धा ।

बोधिसत्त्वः स्वस्य स्यूततः पञ्चशतं रजतनाणकानि, तावतः एव मूल्यस्य वस्तूनि च तस्यै वृद्धायै समर्प्य - ''आर्ये ! मत्समीपे अष्टौ रजतनाणकानि, एषः स्यूतः, तुला च सन्ति । अन्यानि सर्वाणि वस्तूनि अहं भवत्यै दत्तवान् अस्मि'' इति उक्तवान् । तत् सुवर्णपात्रं स्वीकृत्य ततः निर्गतवान् च ।

बोधिसत्त्वः स्वसमीपे यानि अष्टौ रजतनाणकानि रक्षितवान् आसीत् तानि नदीतरणार्थं नाविकाय दातुम् ।

बोधिसत्त्वस्य निर्गमनस्य अनन्तरं कृपणः वणिक् पुनरपि तस्याः वृद्धायाः समीपम् आगतवान् । महान्तं त्यागं कुर्वन् इव सः वृद्धाम् अवदत् - ''तत् प्राचीनं पात्रं मह्यं दत्त्वा किमपि एकं वस्तु स्वीकरोतु'' इति ।

तदा नितरां क्रुद्धा वृद्धा तम् अवदत् - ''अये, तत् पात्रं वराटिकामूल्यकम् अपि न इति भवान् माम् उक्तवान् । किन्तु कश्चन धर्मात्मा वणिक् अत्र आगत्य सहस्रं रजतनाणकानि दत्त्वा तत् स्वीकृतवान्'' इति ।

एतस्य श्रवणात् तस्य कृपणस्य वणिजः मतिः भ्रान्ता इव जाता ।

''किं सः लक्षमुद्रामूल्यकं तत् पात्रं वशीकृत्य गतवान् ! अहो, मम महतीं हानिं कल्पितवान् सः !'' इति उच्चैः आक्रोशनं कृतवान् कृपणः वणिक् । आवेशाविष्टः सः रुदन् स्वस्य वस्तूनि सर्वाणि तत्रैव परित्यज्य तुलां गृहीत्वा नदीतटं प्रति धावितवान् । शरीरात् पततः वस्त्रस्य विषये अपि तस्य अवधानं न आसीत् । यावत् सः नदीतीरं प्राप्तवान् तावता बोधिसत्त्वः तीरात् दूरं गतवान् आसीत् नौकया ।

कृपणः बोधिसत्त्वम् उच्चैः अवदत् - ''कृपया प्रत्यागच्छतु'' इति । बोधिसत्त्वः तत् अशृण्वन् इव ततः अग्रे अगच्छत् । एतत् दृष्टवतः कृपणवणिजः शरीरं कम्पमानं जातम् । तस्य मुखात् रक्तं निर्गतम् । द्वेषं सोढुम् अशक्नुवतः तस्य शरीरं भूमौ अपतत् । सः तत्रैव प्राणान् अत्यजत् ।

ततः बोधिसत्त्वः दानादीनि पुण्यकर्माणि कुर्वन् सुखेन जीवितवान् ।





# विष्णुपुराणम्

सूतमहर्षिः नारदमुनेः कथां श्रावयितुम् उद्युक्तः -

पूर्वस्मिन् जन्मनि नारदः कस्याश्चित् दास्याः पुत्रत्वेन जन्म प्राप्तवान् आसीत् । सा दासी कस्यचित् भक्तस्य गृहे कार्यं करोति स्म । तस्य भक्तस्य गृहे सदा सज्जनानां, विरागिसंन्यासिनाम्, ऋषिमुनीनां च सत्कारः प्रचलति स्म । बालकः नारदः तादृशानां ज्ञानिनां सेवां श्रद्धया करोति स्म । भगवतः विष्णोः महिम्नां चर्चां तु सः श्रद्धया भक्त्या च शृणोति स्म । तस्य कार्येषु प्रमुखम् आसीत् आगतेभ्यः जलस्य दानम् । जलस्य पर्यायपदं 'नारः' इति । एवं नारदान-कारणतः सः 'नारदः' इति ख्यातः जातः ।

कदाचित् नारदस्य माता सर्पदंशनात् मरणं प्राप्तवती । स्वस्य पिता कः इति नारदः न जानाति स्म । जनाः तं दासीपुत्रं कथयन्ति स्म । मातुः मरणस्य अनन्तरम् अल्पे एव काले आश्रयदाता गृहस्वामी अपि स्वर्गस्थः जातः । नारदः इदानीम् आश्रय-हीनः जातः । सः इतस्ततः अटति स्म । यदा बुभुक्षा भवति तदा सः कस्यचित् गृहस्य पुरतः तिष्ठति स्म याचनाय । किन्तु गृहजनाः - 'पापिनः एतस्य पिता कः इत्यपि न ज्ञायते' इति वदन्तः तं ततः दूरं प्रेषयन्ति स्म । नारदः साधुस्वभावः । अतः दुष्टाः बालाः तम् उद्दिश्य धैर्येण पाषाणान् क्षिपन्ति स्म । तं बहुधा पीडयन्तः सन्तोषम् अनुभवन्ति स्म ।

एतादृशीभिः पीडाभिः पीडितः नारदः कदाचित् अचिन्तयत् - 'एतेषां मनुष्याणां मध्ये मम जन्म किमर्थं वा जातम् ? मया को वा अपराधः कृतः ? एते मद्विषये किमर्थम्



एवं व्यवहरन्ति ? कीटादयः वन्यपशु-पक्षिणः चापि सुखेन जीवन्ति । तदेव भाग्यं नास्ति मम' इति । एवं चिन्तयन् सः अरण्यं प्रति प्रस्थितवान् । गमनसमये तेन ऋषि-मुनीनां वचनानि श्रुतानि ।

'मया अपि तपस्यां कृत्वा देवकुले जन्म प्राप्तव्यम्' इति निश्चित्य सः अरण्ये कुत्रचित् उपविश्य तपस्याम् आरब्धवान् ।

'अनाथानां रक्षकः, समस्तस्य जगतः पिता भगवान् मयि यथेच्छम् आचरतु नाम । तदेव सम्मतं मम' इति चिन्तयन् सः समयव्ययम् अपरिगणय्य घोरे तपसि लीनः जातः । नारदस्य तपस्या समाप्ता जाता । तस्य अन्तः दिव्यं किञ्चन तेजः प्राविशत् ।

ज्योतीरूपेण प्रत्यक्षः जातः भगवान् विष्णुः अवदत् - ''वत्स ! नारद ! भवान् मयि लीनतां प्राप्तवान् अस्ति । एतदनन्तरं ब्रह्मणः मानसपुत्ररूपेण भवतः जन्म भविष्यति । भवतः अन्तः मम अंशः भविष्यति । भवान् चिरञ्जीवी सन् त्रिषु अपि लोकेषु सञ्चरन् मम स्तुतिं करिष्यति'' इति ।

एतदनन्तरं नारदः विष्णोः अंशेन सहितः सन् ब्रह्मणः मानसपुत्ररूपेण जन्म प्राप्तवान् । देवमुनित्वेन ख्यातः सन् सः जनानाम् आदरपात्रं जातः । विष्णोः अवतारेषु अन्यतमत्वेन भाव्यते नारदावतारः अपि ।

एतादृशस्य नारदस्य उपदेशं प्राप्य ध्रुवः वेगेन अग्रे गतवान् । तदवसरे उत्तमकुमारः अश्रूणि स्रावयन् तत्समीपम् आगत्य तदीयं गमनम् अवरुन्धन् अवदत् - ''अग्रज ! भवता अरण्यं प्रति न गन्तव्यम् । भवान् यदि अरण्यं गच्छेत् तर्हि अहं केन सह वा सम्भूय हरिनामसङ्कीर्तनं कुर्याम् ? मम मात्रा भवान् तर्जितः स्यात् । मया किं वा अपराद्धम् ? मयि किमर्थं कोपः भवतः ?'' इति ।

ध्रुवः उत्तमकुमारं प्रीत्या आलिङ्ग्य अवदत् - ''सहोदर ! मात्रा मह्यं जन्म दत्तम् । जन्मदात्री सा श्रेष्ठा इति किं मया न निरूपणीयम् ? तत् साधयितुम् एव अहम् अरण्यं प्रति गच्छन् अस्मि'' इति ।

तदा उत्तमः अवदत् - ''एवं तर्हि अहम् अपि भवता सह आगमिष्यामि । भवान् तपस्यां करोतु । अहं कन्दमूलफलादीनि आनयन् भवतः सेवां करिष्यामि'' इति ।

''एवं कृतं चेत् भवतः माता रोदनं करिष्यति । अहं भवतः अग्रजः अस्मि । अतः भवता ज्येष्ठस्य मम वचनम् अङ्गी-करणीयम् एव । इतः प्रतिगच्छतु तावत्''

इति अवदत् ध्रुवः ।

एतानि वचनानि श्रुत्वा उत्तमकुमारः तत्रैव भूमौ पतितः सन् रोदनम् आरब्धवान् । तदा तत्र आगता सुरुचिः सान्त्वनं कर्तुम् उद्युक्ता । कुपितः उत्तमकुमारः ताम् अवदत् - ''अम्ब ! मां मा स्पृशतु भवती । भवत्याः कारणतः एव अग्रजः अस्मान् त्यक्त्वा अरण्यं गच्छन् अस्ति'' इति ।

पुत्रस्य तर्जनं श्रुत्वा लज्जिता सुरुचिः शिरः अवनमय्य आत्मनिन्दापुरस्सरम् उक्तवती - ''अहं पापिनी अस्मि । मम कारणतः एव एतत्सर्वं जातम्'' इति ।

तावता तत्र उपस्थितः राजा उत्तानपादः अवदत् - ''ध्रुव ! भवान् मा गच्छतु । मम अविवेकस्य कारणतः एव एतत्सर्वं जातम् । एतत् राज्यं भवतः'' इति ।

एतावता ध्रुवः सुदूरम् आगतवान् आसीत् एव । नारदः सुनीतिम् अवदत् - ''अम्ब ! भवत्याः गर्भतः रत्नतुल्यः पुत्रः जातः अस्ति । भवती स्वपुत्रस्य विषये कामपि चिन्तां मा करोतु । भगवान् नारायणः एव तस्य रक्षणं करिष्यति'' इति ।

ततः सः उत्तानपादं पश्यन् - ''राजन् ! एषः स्वस्य पितामहस्य स्वायम्भुवमनोः वंशस्य कीर्तिं वर्धयिष्यति । एषः तपसे गच्छन् अस्ति यत् तत्र न कस्यापि दोषः । सर्वं श्रीमन्नारायणस्य सङ्कल्पानुसारम् एव प्रवर्तिष्यते'' इति वदन् सर्वेषां सान्त्वनं कृतवान् ।

मधुवने उपविष्टः ध्रुवः 'ओं नमो नारायणाय' इत्येतं मन्त्रं जपन् तपसि लीनः



आसीत् । ध्रुवस्य तपसः उग्रतायाः कारणतः त्रयः अपि लोकाः कम्पिताः जाताः ।

यदि कोऽपि कठोरे तपसि लीनः दृश्येत तर्हि इन्द्रः चिन्तयति यत् एषः तपसा मम स्थानं प्राप्तुं प्रयतमानः तु न स्यात् खलु इति । तस्मात् एव सः तपसि लीनस्य तपोभङ्गाय विविधानि इन्द्रजालानि रचयति । एतदनुगुणम् एव सः स्वस्य वज्रायुधं कम्पयित्वा झञ्झावातं तडितः च उत्पाद्य भयङ्करम् उत्पातं रचितवान् । किन्तु एतस्मात् ध्रुवः किञ्चिदपि न भीतः । इन्द्रः पाषाण-खण्डानां वर्षणम् आरब्धवान् । तदा विष्णोः चक्रं ध्रुवस्य उपरि भ्रमत् तान् शिलाखण्डान् दूरे अक्षिपत् ।

तस्मिन् समये नारदः इन्द्रस्य समीपं गत्वा अवदत् - ''भवता ध्रुवः सामान्यबालक-मात्रत्वेन परिगणितः । किन्तु भवता स्मर्तव्यं



यत् तस्य केशः अपि कम्पयितुं भवता न शक्यते इति । यदि तं पीडयितुं प्रयत्येत तर्हि भवता अपमाननं प्राप्तव्यं भवेत् । ध्रुवस्य दृष्ट्या इन्द्रपदवी तृणसमाना'' इति ।

अन्ते ध्रुवस्य तपसा सन्तुष्टः भगवान् विष्णुः तस्य पुरतः प्रत्यक्षः जातः । ध्रुवः विष्णोः पादौ भक्त्या नमस्कुर्वन् आनन्देन मूकः जातः । सः अचिन्तयत् - 'हे भगवन् ! अहं पूर्णरूपेण भवतः स्तुतिं कर्तुम् इच्छामि । किन्तु किं करवाणि, अहं बालकः अस्मि । भवतः स्तवनाय मम समीपे शब्दाः न सन्ति' इति । तदा विष्णुः स्वस्य शङ्खेन ध्रुवस्य कण्ठम् अस्पृशत् । अनन्तरक्षणे एव वेदस्तोत्राणि सामगान-रूपेण ध्रुवस्य कण्ठात् निर्गतानि ।

विष्णुः मन्दहासपूर्वकम् अवदत् - ''वत्स ! किमिष्यते भवता ? वदतु'' इति ।

तदा ध्रुवः भक्त्या अवदत् - ''यथा भ्रमरः सदा कमले एव संलग्नः भवति तथा अहम् अपि मन्दहासपूर्णे भवन्मुखदर्शने संलग्नः भवेयम् इति मम इच्छा । एतस्मात् अतिरिक्तम् अन्यत् किमपि न इष्यते मया'' इति ।

''भवतु नाम । इदानीं भवान् स्वराज्यं गत्वा धर्ममार्गम् अनुसरन् शासनं करोतु । तदनन्तरं भवान् ध्रुवपदं प्राप्स्यति । कल्पान्तः जातः चेदपि भवान् तस्मिन् अचले पदे तिष्ठन् प्रकाशमानः भविष्यति'' इति उक्त्वा भगवान् विष्णुः अन्तर्हितः जातः ।

ध्रुवस्य अनुग्रहाय अवतारं प्राप्तवतः विष्णोः अवतारः 'ध्रुवनारायणावतारः' इति उच्यते । एतदनन्तरं ध्रुवः माहिष्मतीपुरीं प्रति आगतवान् । उत्तानपादः स्वस्य राज्यं तस्मै समर्प्य तपस्यार्थं निर्गतवान् । ध्रुवः उत्तमरीत्या शासनम् आरब्धवान् ।

एतावत्पर्यन्तम् अपि उत्तमकुमारः विवाहितः जातः न आसीत् । राजधर्मं पालयन् सः कदाचित् क्रूरमृगेभ्यः जनानां रक्षणाय मृगयार्थम् अरण्यं गतवान् । हिमालयस्य उपत्यकायां वसन्तः दुष्टाः यक्षाः तम् आक्रम्य मारितवन्तः ।

पुत्रस्य मरणवार्तां श्रुत्वा नितरां दुःखतप्ता सुरुचिः अरण्यं गत्वा तत्रत्यं दावानलं प्रविश्य भस्मसात् जाता । ध्रुवः यक्षाणां नाशनाय यक्षनगरम् अलकापुरीम् आक्रान्त-वान् । यक्षाः आत्मना ज्ञाताः मायाविद्याः प्रयुक्तवन्तः । ध्रुवः नारायणास्त्रं प्रयुज्य तेषां मायाकृत्यानि विफलीकृतवान् । तान्

पराजितवान् च । यक्षराजः कुबेरः ध्रुवं शरणं गतः । तस्य मैत्रीं सम्पाद्य तदीयां सम्पत्तिं प्रत्यर्प्य तं प्रतिप्रेषितवान् ध्रुवः ।

गच्छता कालेन ध्रुवेण बहवः पुत्राः प्राप्ताः । सः बहूनि वर्षाणि धर्ममार्गेण शासनं कुर्वन् स्वायम्भुवमनुवंशस्य ख्यातिं वर्धितवान् । ततः सः ज्येष्ठं पुत्रं सिंहासने उपवेश्य बदरिकाश्रमं प्रति गतवान् । तत्र विष्णुं ध्यायन् स्वर्णशरीरं प्राप्तवान् सः ।

भगवतः विष्णोः आदेशस्य अनुगुणं तदीयाः दूताः ध्रुवस्य समीपं किञ्चन विमानं नीतवन्तः । ते अपि विष्णुः इव एव दृश्यन्ते स्म । तेषाम् अपि चत्वारः हस्ताः आसन् ।

ध्रुवः तान् दूतान् अवदत् – ''मम मात्रा यत् पदं न प्राप्तं तत् मह्यम् अपि न आवश्यकम्'' इति । तदा देवदूताः दिव्येन विमानेन गच्छन्तीं सुनीतिं तस्मै दर्शितवन्तः । एतत् दृष्ट्वा ध्रुवः प्रसन्नः जातः । सः विमानम् आरुह्य ग्रहमण्डलं, नक्षत्रमण्डलं, सप्तर्षिमण्डलं च अतिक्रम्य ध्रुवपदं प्राप्तवान् । सः विष्णुम् एव पश्यन् उज्ज्वलकान्त्या शोभते । सप्तर्षिमण्डलं तं परितः भ्रमति । समस्तैः ग्रहगणैः पूर्णं शिंशुमारचक्रं तस्य अधः परिभ्रमणं कुर्वत् भवति ।

सत्यलोकः, तपोलोकः, जनोलोकः, महर्लोकः, स्वर्लोकः, भुवर्लोकः, भूलोकः इत्येते लोकाः ऊर्ध्वलोकाः इति कथ्यन्ते । अतलः, वितलः, सुतलः, रसातलः, तलातलः, महातलः, पातालः इत्येते अधोलोकाः । चतुर्दशानां लोकानाम्



उपरि विश्वशिखराग्रे तिष्ठन् ध्रुवः सर्वासां दिशानां दिशात्वसूचकः सन् अचलनक्षत्ररूपेण प्रकाशमानः भवति ।

यदि आस्था स्यात् तर्हि सुमहत् कार्यम् अपि साधयितुं शक्यम् इत्येतस्य प्रमाणभूतः अस्ति ध्रुवः । अत्यल्पे एव वयसि तपः कृत्वा भगवत्साक्षात्कारं प्राप्तवान् सः'' इति ध्रुवस्य कथां समाप्य सूतमहर्षिः पुनरपि स्वस्य कथनम् अनुवर्तितवान् ।

मत्स्यः जलचरमात्रम् अस्ति । कच्छपः (कूर्मः) तु उभयजीवी । तन्नाम जले स्थले च जीवितुं समर्थः सः । जलतः जीवी भूमिम् आगतः इत्यस्य अर्थः जलचरावस्थातः भूचरावस्थां प्रति गमनं जातम् इति । जीवविकासक्रमं दर्शयति एतत् । एतं विकासक्रमं सूचयन् इव भगवन् विष्णुः कूर्मावतारं प्राप्तवान् । दशावतारेषु द्वितीयः अवतारः एषः ।

देवाः राक्षसाः च क्षीरसागरस्य मथनं कृत्वा अमृतं प्राप्तव्यम् इति सङ्कल्प्य तदर्थं सन्नद्धाः जाताः । बाहुबलेन सङ्ख्यया च राक्षसाः एव अधिकशक्तिशालिनः । ते अचिन्तयन् यद् यदा अमृतं प्राप्यते तदा तत् समग्रम् अस्माभि एव स्वीकरिष्यते इति ।

'राक्षसाः अपि यदि अमृतं प्राप्नुयुः तर्हि ते अमराः भवेयुः । तदा महती हानिः सम्भवेत्' इति चिन्तयन्तः देवाः एतस्याः समस्यायाः निवारणदायित्वं विष्णौ एव स्थापितवन्तः ।

क्षीरसागरे मन्थानत्वेन मन्दरपर्वतं स्थापयित्वा महासर्पं वासुकिं मन्थनरज्जुं परिकल्प्य समुद्रमथनं करणीयम् इति निर्णीतम् । किन्तु मन्दरपर्वतस्य आनयनं, समुद्रे स्थापनं च सरलं कार्यं न आसीत् । विष्णुः देवदानवेषु अनुग्रहबुद्धिं वहन् एतत् कार्यं सम्पादितवान् । तस्मात् सः 'गिरिधरः' इति ख्यातः जातः ।

राक्षसाः उक्तवन्तः यत् वयं वासुकेः उत्तमाङ्गभूतस्य शिरसः भागम् एव गृह्णीमः इति । विष्णुः देवान् बोधयित्वा अङ्गीकारितवान् । पुच्छभागस्य ग्रहणं न अपमानाय इति अवदत् सः । ततः देवैः पुच्छभागस्य ग्रहणम् अङ्गीकृतम् । एतदनन्तरं क्षीरसागरमथनम् आरब्धम् ।





विविधदेशीयाः कथाः

# आतङ्कमयी एका रात्रिः

*(चीनादेशस्य जनाः नववर्षस्य आचरणं कदा आरब्धवन्तः इति भवन्तः जानन्ति किम् ? तत् ज्ञातुम् एतां कथां पठन्तु ।)*

सहस्रात् वर्षेभ्यः पूर्वं चीनादेशे एकं सुन्दरं शान्तं च नगरं आसीत् । तत्रत्याः जनाः श्रमशीलाः । आदिनं कार्यं कृत्वा सायं ते विश्रान्तिं स्वीकुर्वन्तः कथाः शृण्वन्ति स्म ।

ग्रीष्मसमये वृद्धाः तरुणाः चापि सूर्यास्तानन्तरं गृहात् बहिः भवन्ति स्म । सर्वेऽपि आमोदप्रमोदेषु निरताः भवन्ति स्म च । अल्पवयस्काः बालाः अङ्गणेषु विहरन्तः क्रीडन्ति स्म । ततोऽपि अल्पवयस्काः तु पितामहस्य अङ्के उपविश्य पद्यानि शृण्वन्ति स्म, गायन्ति स्म च ।

शीतकाले महत् शैत्यं भवति तत्र । अतः बहवः जनाः गृहस्य अन्तः एव स्थित्वा अग्निं प्रज्वालयन्तः शैत्यनिवारणं कुर्वन्ति स्म । देहे औष्ण्यम् उत्पादयितुं ते उष्णं चायपानीयं मदिरां वा पिबन्ति स्म ।

एतादृशे शैत्यकाले कस्मिंश्चित् दिने तस्मिन् नगरे भयकरी घटना अभवत् । एषा दुर्घटना कस्याञ्चित् धर्मशालायाम् अभवत् । सा धर्मशाला तद्दिने जनैः पूर्णा आसीत् ।

''अहो ! एतत् चायपानीयं शीतकाले कीदृशम् उत्साहं जनयति ! चायपानं विना अग्रे मम प्रवासः एव कष्टाय स्यात्'' इति कश्चन प्रयाणिकः उक्तवान् ।

''सत्यम् । हिमप्रदेशात् महता कष्टेन मया अद्य अत्र आगतम्'' इति अपरः उक्तवान् ।

कश्चन अध्यापकः मध्ये उक्तवान् - ''शालातः आगमनसमये मम पादः हिमे मग्नः अभवत् । ततः निष्कासनप्रयत्ने सः पादः इतोऽपि अन्तः गतः । तदा पार्श्वे पतितस्य काष्ठस्य साहाय्येन अपायात् अहम् आत्मानं रक्षितवान्'' इति ।

एवं धर्मशालायाम् अग्निज्वालया औष्ण्यं सम्पादयन्तः जनाः परस्परं स्वानुभवं कथयन्तः आसन् । तदा अकस्मात् कश्चन भयानकः शब्दः श्रुतः । कश्चन दैत्याकारः



प्राणी अन्तः सरभसम् आगत्य सर्वान् मारयितुम् आरब्धवान् ।

सर्वे मृताः, ऋते कस्माच्चित् बालकात् । सः बालः तं प्राणिनं दृष्ट्वा भीत्या प्रज्ञाहीनः सन् आसन्दस्य अधः पतितः आसीत् । तस्य दैत्यप्राणिनः दृष्टिः तत्र न गता ।

अनया घटनया समग्रं नगरं भयग्रस्तम् अभवत् । बन्धूनां मरणेन सर्वे जनाः व्याकुलाः अभवन् । ते तस्य दैत्यस्य 'नियन' इति नाम कृतवन्तः । तस्य अन्वेषणार्थं कश्चन दलं रचितवन्तः । तेन दलेन अहर्निशं सः दैत्यः अन्विष्टः । किन्तु कुत्रापि तस्य दर्शनं नाभवत् ।

समग्रे नगरे जनाः अटनमेव त्यक्तवन्तः । सर्वदा गृहेषु एव तिष्ठन्ति स्म ते । तस्मात् कारणात् वीथयः शून्याः अभवन् । सर्वे स्वगृहे वातायनं द्वारं च दृढतया पिधाय वसन्ति स्म । यदा वसन्तऋतुः आगतः तदा पुनः नगरं किञ्चित् श्वसितुम् आरभत इव ।

क्षेत्रेषु हरितानि सस्यानि सर्वान् तोषयन्ति स्म । मन्दमारुतः सर्वेषाम् आह्लादकरः आसीत् । पशुपक्षिणः सर्वत्र दृश्यन्ते स्म ।

इदानीं गृहे स्थिताः सर्वेऽपि बहिः आगन्तुम् उद्युक्ताः । क्षेत्रेषु बीजावापसमयः आसीत् । स्वीये स्वीये कार्ये मग्नाः जनाः तस्य दैत्यप्राणिनः विषयमेव विस्मृतवन्तः ।

यदा शैत्यकालः आगतः तदा सर्वत्र हिमवृष्टिः आरब्धा । तदा सर्वे जनाः अग्निज्वालां संस्थाप्य एकत्र समूहरूपेण तिष्ठन्ति स्म । एवं स्थिते नगरं पुनः आपदा ग्रस्तम् अभवत् । सः दैत्यप्राणी पुनः आगत्य अनेकान् जनान् मारितवान् । कश्चन पुरुषः तस्याः आपदः रक्षितः सन् उक्तवान् - ''एषः सः एव प्राणी, यः गते वर्षे आगत्य सर्वान् अपीडयत्'' इति ।

नगरे कम्पनम् आरब्धम् । नगरप्रमुखः उक्तवान् - ''अस्माभिः किमपि करणीयम् एव । प्रतिवर्षम् एषः दैत्यप्राणी अस्मान् मारयति चेत् सोढुं न शक्यते'' इति ।

ततः सर्वे ऐन्द्रजालिकान् दृष्ट्वा उपायं पृष्टवन्तः । ऐन्द्रजालिकाः उक्तवन्तः - ''भवन्तः ज्ञातवन्तः स्युः यत् सः दैत्यप्राणी द्विवारमपि शैत्यकालस्य अन्ते आगतः इति । आगामिनि वर्षे तस्य संहाराय इदानीम् एव सन्नाहः चिन्तनीयः'' इति ।

"तस्य राक्षसप्राणिनः प्रतिरोधः कथं करणीयः?" इति कश्चन युवकः पृष्टवान् ।

"रक्तं वर्णं दृष्ट्वा दुष्टशक्तयः पलायन्ते । रक्तवर्णस्य ध्वजाः सर्वान् जीविनः उत्तेजयन्ति । कर्णकठोरशब्दः सर्वान् भाययति । विस्फोटकानि सर्वेषां भीतिकराणि । अतः भवद्भिः किं करणीयमिति इदानीं ज्ञातमिति मन्ये" इति कश्चित् वृद्धः ऐन्द्रजालिकः उक्तवान् । अनन्तरवर्षे शैत्यकालस्य अन्तिमे भागे सर्वेऽपि तं प्राणिनम् अभिमुखीकर्तुं सिद्धाः अभवन् ।

तद्दिनमपि शीघ्रमेव आगतम् । गतवर्षे यस्मिन् दिने तेन आगतं तस्मिन्नेव दिने आगतम् अस्मिन्नपि वर्षे । महिलाः बालाश्च गृहेषु एव आसन् । पुरुषाः एव बहिः आसन् । केचन खड्गधारिणः आसन् । केचन विस्फोटकानि, पटहादिवाद्यं, दण्डान् च स्वीकृतवन्तः । केचन रक्तवर्णस्य ध्वजान् घण्टाश्च स्वीकृतवन्तः ।

तदा अकस्मात् विद्युतः प्रकाशः आगतः । तेन सह भयजनकं गर्जनमपि श्रुतम् । सः दैत्यप्राणी आगतः एव । अग्निगोलके इव तस्य अक्षिणी प्रकाशेते स्म । भयानकः सः राक्षसः आकाशात् पतितः । तस्य बृहत्पादयोः कठोराः नखाः आसन् । तस्य पृष्ठभागे पक्षौ आस्ताम् । खड्गधारिणां समूहेन कृतः प्रहारः तौ पक्षौ अछिनत् ।

तस्य प्रतिरोधात् पूर्वमेव तं परितः स्थिताः सहस्रशः जनाः आक्रमणं कृतवन्तः । ते पटहवाद्यानि वादयन्तः रक्तवर्णध्वजानाम् उड्डयनं कारितवन्तः । विस्फोटकानि ज्वालयित्वा तस्य उपरि क्षिप्तवन्तः । एतस्मात् भीतः सः दैत्यः उच्चैः गर्जनम् अकरोत् । रक्तवर्णध्वजाः तस्य नेत्रदृष्टिम् अपाहरन् । विस्फोटकानां वाद्यानां घण्टानां च शब्दः तस्य शरीरं शक्तिहीनम् अकरोत् । तस्मात् सः ततः पलायितवान् ।

जनाः हर्षध्वनिं कृतवन्तः । "दैत्यः भीतः सन् पलायितः । इतःपरं सः न आगच्छेत् । अद्य अस्माकं नववर्षमिव । वयम् उत्सवम् आचरिष्यामः" इति नगरप्रमुखः उद्घोषितवान् ।

एवं चीनादेशीयानां नववर्षम् आरब्धम् । दैत्यात् मुक्तैः जनैः तद्दिने महता वैभवेन उत्सवः आचरितः, परस्परं गृहं गत्वा शुभाशंसनानि उक्तानि च । उपायनसमर्पणं, नाटकेन मनोरञ्जनं, षड्रसोपेतं भोजनम् इत्यादिना सन्तोषेण उत्सवः आचरितः तैः ।



# पुस्तकात् प्रेरणा



पुस्तकानां पठनात् आनन्दः प्राप्यते । ज्ञानराशिः अपि प्राप्यते । किन्तु प्रेरणा ? सा कदाचित् कैश्चित् एव प्राप्यते । अत्र काचित् तादृशी कथा प्रस्तूयते, यत्र कश्चित् पुस्तकतः प्रेरणां प्राप्तवान्, ततः आजीवनं तत्रत्यस्य तत्त्वस्य अनुगुणं जीवनं कृतवान् ।

किशोरावस्थायाम् एव पुस्तक-पठने विशेषरुचिः आसीत् तस्य । कानिचन पुस्तकानि तस्मिन् विशेष-परिणामम् अजनयन् । तेषु अन्यतमम् आसीत् - जार्ज् वाशिङ्गटनस्य जीवनचरितम् । तस्य पुस्तकस्य काश्चन पङ्क्तयः तस्य मनसि महान्तं प्रभावम् उत्पादितवत्यः । तत्र लिखितम् आसीत् - 'यदि दास्यं पापाय न, तर्हि किमपि पापाय न भवेत्' इति । सः तरुणः एतस्य वाक्यस्य आशयस्य विषये गभीरचिन्तनं कृतवान् । तत् पुस्तकं तस्य प्रियं जातम् ।

एकदा सः शालातः गृहम् आगतवान् । तदा तदीयः पिता तत् अमूल्यं पुस्तकम् उपधानीकृत्य शयितवान् आसीत् । एतत् दृष्टवतः तस्य बालकस्य मनः अशान्तं जातम् । एतस्य उपयोगः एतेन क्रमेण यत् क्रियते तत् उचितं न इति अचिन्तयत् सः । पितुः निद्रायाः भङ्गम् अकृत्वा कथं तत् पुस्तकं ततः स्वीकर्तुं शक्यते इति क्षणकालम् आलोचितवान् सः पितुः शिरसः पार्श्वे उपविश्य तदीयं शिरः स्वस्य अङ्के स्थापयित्वा पुस्तकं तस्मात् स्थानात् अपसारितवान् । पितुः निद्रायाः समाप्तिपर्यन्तं सः तथैव उपविष्टवान् । जागरितः पिता अङ्केन शिरः वहन्तं पुत्रं दृष्ट्वा आश्चर्यं प्राप्तवान् ।

'एवं किमर्थं कृतं भवता ?' इति पुत्रम् अपृच्छत् सः । पुत्रेण पुस्तकविषये यत् उक्तं तत् कुतूहलेन आश्चर्येण च श्रुतवान् सः । अल्पे एव वयसि ज्ञानविषये पुत्रस्य एतादृशीं महतीम् आसक्तिं दृष्ट्वा सः गर्वम् अनुभूतवान् । सः पूर्णेन मनसा पुत्रम् अवदत् - ''वत्स ! ज्येष्ठतां प्राप्य भवान् महापुरुषत्वेन ख्यातः भवेत् । देशं च दास्यात् मुक्तं कुर्यात्'' इति ।

पितुः वचनम् अवितथम् एव जातम् । सः बालः तारुण्ये सुयोग्यः नेता जातः । स्वस्य सिद्धान्तानां विषये बद्धादरः आसीत् सः । शक्तिशालिनः देशस्य राष्ट्रपतिः जातः सः । तस्य नाम आसीत् अब्राहिं लिङ्कन् इति । तेन यत् महत् कार्यं साधितं तन्निमित्तम् अद्यपि कृतज्ञता-पूर्वकं स्मर्यते सः । दास्यस्य निवारणाय तेन प्रबलाः विधयः व्यवहारपथम् आनीताः । तस्मात् तं प्रपञ्चः सगौरवं स्मरति, स्मरिष्यति अपि ।

# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

स्वामिनः जयानन्दस्य पूर्णः विश्वासः यत् मम पुरतः यस्याः मरणं जातं सा शान्तिपुरस्य राज्ञी एव इति । तस्य आदेशस्य अनुगुणं तच्छिष्याः शवस्य निखननं कुर्वन्ति । राजधान्यां वीरसिंहः पट्टाभिषेकार्थं त्वरते । मन्त्री मानवेन्द्रः अत्र असम्मतिं दर्शयति । देवालयसमीपे केचन तम् आक्रामन्ति । अवगुण्ठनधारी कश्चित् तस्य रक्षणं करोति ।




मानवेन्द्रस्य बहिष्कारस्य अनन्तरदिने वीरसिंहः राजोद्याने सञ्चारं कुर्वन् आसीत् । सः नितरां चिन्ताग्रस्तः दृश्यते स्म ।















वसन्तस्य शिरश्छेदः घोषितः भवति । अनन्तरदिने प्रातः वसन्तः वीथीषु नीयते । धूलिकारणतः नगररक्षकः, वीरसिंहः, नूतनः सेनापतिः अमरसिंहः च जनैः स्पष्टतया न दृश्यन्ते ।




नगरप्रमुखस्य अश्वस्य घट्टनं करोति सः । तस्मात् नगरप्रमुखः अश्वात् पतति ।

सः अज्ञातः अश्वारोही वसन्तस्य समीपम् आगच्छति । तम् आकृष्य गृहीत्वा .....



... स्वस्य अश्वस्य उपरि उपवेशयति ।



ततः स्वस्य अश्वं वेगेन धावयन् ततः अदृश्यः भवति ।













अवगुण्ठनधारी अश्वारोही अरण्यं प्रति धावति ।
















अनुवर्तते

# रक्ष्यतां विद्युच्छक्तिः

एकस्मिन् सायङ्काले वीणा तस्याः पितामहः च ल्युडोवाद्यं वादयन्तौ आस्ताम् । तदा तत्र वीणायाः पिता आगतवान् । सः म्लानमुखः परिदृश्यते स्म ।

पितामहः तं पृष्टवान् - "वत्स ! किमर्थं खिन्नः इव लक्ष्यते भवान् ?" इति ।



"अहो ! एतस्य मासस्य विद्युत्बिल् अस्ति महाघातकरम् ! मया सम्पादितं सर्वं विद्युतः व्ययस्य निर्वाहाय अपि अपर्याप्तं स्यात् । न जाने एतावान् विद्युद्व्ययः कथं भवति इति" इति विषादेन अवदत् वीणायाः पिता ।

"एतस्य उत्तरम् अहं वदामि । भवान् परितः सकृत् दृष्टिं पातयतु" - पितामहः अवदत् ।

वीणायाः पित्रा परितः दृष्टिः प्रसारिता । प्रकोष्ठे दूरदर्शनं प्रवर्तितम् आसीत् । तस्य द्रष्टा तु कोऽपि न आसीत् । प्रकोष्ठेषु दीपाः ज्वलन्ति स्म, व्यजनानि चलन्ति स्म च । गृहसदस्याः सर्वे तु उपविष्टाः आसन् स्वागतप्रकोष्ठे, न तु प्रकोष्ठे आसीत् कोऽपि ।

"अहं विद्युतः अपव्ययस्य अन्यानि अपि उदाहरणानि दर्शयिष्यामि" इति उक्त्वा पितामहः वीणाम् उद्दिश्य अवदत् - "वत्से ! भवती बहुवारं जलपानाय शीतकम् उद्घाटयति । जलपानसमाप्तिपर्यन्तं तत् उद्घाटितम् एव तिष्ठति । तस्मात् तत्रत्यं शैत्यम् अपगच्छति । तावतः शैत्यस्य निर्मित्यै विद्युतः अधिकव्ययः भवति ।"

एषः अंशः वीणया इतःपूर्वं ज्ञातः न आसीत् । एतादृशं कार्यम् इतः परं न करिष्यामि इति सङ्कल्पं कृतवती सा ।

पितामहः पुनः अवदत् - "भवती स्नानाय उष्णकारकं यन्त्रं घण्टां यावत् प्रवर्तयति । स्नानानन्तरम् अपि तत् न स्थग्यते । तस्मादपि विद्युतः अपव्ययः भवति ।"

"इदानीं भवन्तः सुवर्णयुगे सन्ति इति भाति मम । वयं बाल्ये ग्रामे निवसामः स्म । तत्र विद्युद्व्यवस्था एव न आसीत् । मृत्तैलदीपप्रकाशे अधीतमस्माभिः । दूरदर्शन-शीतक-मिश्रकादयः न आसन् एव । तत्कालीनं जीवनं स्मृतं चेत् विद्युच्छक्तेः अपव्ययः स्थगितः भवेत् ।"

एतत् श्रुत्वा वीणा सङ्कल्पं कृतवती यत् इतः परम् उपयोगे असति दीपनिर्वापणादिकम् अवश्यं करिष्यते इति ।

# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## भवदर्थकं विज्ञानम्



### नेत्रयोः संरक्षकम्

दृष्टिम् ऊर्ध्वमुखीं कुर्वन्तु । तेन भ्रुवौ दृश्येते खलु ? एते भ्रुवौ किमर्थं स्तः ? किम् अलङ्कारमात्राय ते ? सर्वथा न । वस्तुतः नेत्रयोः रक्षिके ते । भारतीयः सर्वोऽपि ग्रीष्मकाले स्विन्नः भवति एव । स्वेदधारा एव प्रवहति ललाटतः । यदि भ्रुवौ न स्यातां तर्हि ललाटतः निर्गता स्वेदधारा नेत्रयोः उपरि आगच्छेत् । तदा दृष्टिः तु अस्पष्टा स्यात् । स्वेदस्था मलिनता च नेत्रे प्रविशेत् । शरीरे स्थितैः मलिनांशैः युक्तः भवति स्वेदः । एवं जगतः एव नेत्रायमानयोः अस्माकं नेत्रयोः रक्षणं कुरुतः भ्रुवौ एव ।

सुसंस्थानयुक्ते भ्रुवौ नेत्रयोः शोभां, तद्द्वारा शरीरशोभां च वर्धयतः । मुखे स्थितेषु अङ्गेषु अतिप्रमुखम् अस्ति नेत्रम् । न केवलं दृष्टिशक्तिकारणतः, अपि तु भावस्य अभिव्यक्तिकारणतः अपि तस्यास्ति विशेषमहत्त्वम् । सौन्दर्यदृष्ट्या अपि तस्य महत्त्वम् अनल्पम् एव ।

## परिसरवैचित्र्यम्

### उड्डयनसमर्थाः मण्डूकाः

कः जीवी दुर्बलां शाखां पादाभ्यां ग्रहीतुम् अर्हति ? कश्च नदीतटस्थं तृणम् अवलम्ब्य स्थातुम् अर्हति ? को वा दुरारोहं वृक्षम् आरोहन् उरसा तम् आलिङ्ग्य स्थातुम् अर्हति ?

वस्तुतः एतादृशानि सर्वाणि कार्याणि एकः एव जीवी कर्तुम् अर्हति । सः अस्ति – मण्डूकः । प्रशिक्षिताः मण्डूकाः केचन पूर्वोक्तानि अन्यविधानि च कौशलानि प्रदर्शयन्ति सर्कस्-संस्थादिषु ।

यानि कौशलानि मानवैः साधयितुम् अशक्यानि तानि लीलया कुर्वन्ति एते मण्डूकाः । यतः तेषां पादाग्रे निर्वातकल्पकः पटलः कश्चन भवति । एतस्य साहाय्येन सः यत्किञ्चित् तलं दृढतया ग्रहीतुम् अर्हति । कम्पमानम् अपि वस्तु सः गृह्णाति लीलया । पत्राणाम् अधोभागः अपि तेन पादाभ्यां गृह्यते विना क्लेशम् ।

मण्डूकेषु वृक्षमण्डूकजातिः अन्यतमा । तज्जातीयाः एतादृशेषु कौशलेषु निपुणाः । एतेषु पञ्चशताधिकाः प्रभेदाः सन्ति । प्रतिभूखण्डं प्रायः एताः जातयः भिद्यन्ते ।



# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### सूरणकन्दस्य उत्सवः !

न्यूगिनियादेशे सेपाक्नदीप्रदेशे निवसन्तः अबेलम्जातीयाः जनाः शताधिकविधान् सूरणकन्दान् वर्धयन्ति ।

उत्तमस्य सूरणकन्दस्य वर्धनम् अभिमानस्य विषयं मन्यते अबेलम्जातीयाः जनाः । तज्जातीयैः 'सूरणकन्दमहोत्सवः' अपि आचर्यते । तत्र जनाः, गणाः, ग्रामाः च



आत्मना वर्धितस्य सूरणकन्दस्य प्रदर्शनं कुर्वन्ति । तत्र सामान्यस्य सूरणकन्दस्य दैर्घ्यं भवति नवपाददैर्घ्यात्मकम् । क्वचित् द्वादशाधिकपाददैर्घ्यात्मकम् अपि भवति ।

प्रदर्शनार्थं स्थाप्यमानाः सूरणकन्दाः वर्णेन मुखावरणेन च अलङ्कृताः भवन्ति । तत्र स्थापिताः ते कन्दाः न भवन्ति भक्षणाय । प्रदर्शनानन्तरं दूरे क्षिप्यन्ते ते । मित्रेण अन्येन वा आनीतात् अपि दीर्घस्य सूरणकन्दस्य क्षेपणं गर्वस्य विषयं मन्यते अबेलम्जातीयः ।

## अभिवर्ध्यतां ज्ञानशक्तिः

### भारतीयपुराणानां विषये भवतां ज्ञानं कियत् ?

१. महाभारतसङ्ग्रामे नकुलः केन सह युद्धम् अकरोत् ?





२. रामायणं स्मरन्तः वदन्तु - ककुत्स्थः कः ?

३. महाभारतस्य कस्यचित् नायकस्य नाम 'सव्यसाची' इति । तस्य अपरं प्रसिद्धं नाम किम् ?





४. कस्य पत्न्याः नाम छाया इति ।

५. देवान्तकः रावणस्य पुत्रः । सः पराजितः जातः रामरावणयुद्धे । तं जितवान् कः ?



(उत्तराणि ६६ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



SOURAA



SIVARKKAMANI

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु – ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## पुरस्कृता शीर्षिका





भाग्यं बहुमन्यमानः अप्रबुद्धः परिलक्षयति हस्तरेखाम् ।
हस्तबलं बहुमन्यमानाः अबोधाः प्रदर्शयन्ति सङ्घशक्तिम् ।

## अभिनन्दनानि

'जनवरी'मासस्य चित्रशीर्षिकाप्रेषकः –

**एस्. सिद्धार्थः**

*७, श्रीरामकालनी, थियासफिकल्सोसैटी*

**चेन्नै – ६०० ०२० (त.ना.)**

## ज्ञानशक्तिः वर्ध्यताम् – उत्तराणि

१. शकुनिना सह ।
२. रामस्य पूर्वजः ज्येष्ठः ।
३. अर्जुनः इति ।
४. सूर्यस्य ।
५. हनुमान् ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

